# राजस्थानस्याधुनिकाः
# संस्कृत कथालेखकाः

•

सम्पादक- डॉ० [illegible]



राजस्थान साहित्य अकादमी, उदयपुर

RAJASTHANASYAADHUNIKA SANSKRIT KATALEKHAKA



Edited By: Dr. Pushkardatta Sharma

प्रकाशक : राजस्थान साहित्य अकादमी, उदयपुर
मुद्रक : मेसर्स महावीर प्रिन्टिंग प्रेस, उदयपुर
संस्करण : मार्च, 1980
मूल्य : सत्रह रुपये मात्र

# प्रकाशकीयम्

'राजस्थान साहित्य अकादमी' राज्य हिन्दी, संस्कृतयोस्तथा राजस्थानी भाषायां साहित्योन्नत्यै सर्वथा समर्पितं संस्थानं वर्तते।

एतत् संस्थानं स्व नानाविध प्रवृत्तीनां माध्यमेन प्रदेशे साहित्यस्योन्नयनाय, जागरणाय साहित्यसर्जनाय च पूर्णरूपेण प्रयत्नशीलमस्ति।

संस्थानस्यैका विशिष्टप्रवृत्ति राजस्थान प्रदेशस्य साहित्य सर्जनशीलानां विदुषां कृतीनां प्रकाशनमप्यस्ति। अस्यां योजनायां अन्तर्गताद्यावधि शताधिक ग्रन्थानां प्रकाशनं सम्पन्नम्। प्रकाशितेष्वनेकेषु ग्रन्थेषु संस्कृत वाङमयस्याप्यनेके ग्रन्थाः सम्मिलिताः सन्ति।

राजस्थानस्याधुनिक साहित्य-सर्जकानां संस्कृत लेखकानामिदं सङ्कलनं पाठकेभ्यः प्रस्तुतं कुर्वदिदं संस्थानं परमं हर्षमनुभवति। राजस्थानस्य संस्थानस्य संस्कृतज्ञ अद्यापि जनजीवनेन सह संयुज्य गाम्भीर्येण, तल्लीनतया सूक्ष्मदृष्ट्या च यदनुभवति तत् सुचारुतया अभिव्यक्तं विधाय जनमानसेषु स्थानं विदधाति अस्मिन् सङ्कलने प्रकाशिता कथा अस्य प्रमाणमस्ति।

साहित्य अकादमी आशास्ते संस्कृतज्ञेभ्य विद्वद्भ्य एतत् सङ्कलनं रोचिष्यते, येनसंस्थानं प्रोत्साहितमुत्तरोत्तर कार्यं भूयोऽपि द्विगुणोत्साहेन कुर्यात्।

उदयपुर
मार्च १९८०

राजेन्द्र शर्मा
निदेशक

## कथानुक्रम

# सम्पादकीयम्

समस्तेषु काव्याङ्गेषु गद्यं खलु श्रेष्ठमिति सुधीवरैरालोचकैः बहुश आगतम्। गद्यं च कथनस्य वा श्रोतव्यस्य गद्यमित्यनया व्युत्पत्त्याऽप्यभिव्यक्त सर्वाधिकं सामर्थ्यमस्यामेव काव्यविधायां मन्यते। भवतु नाम पद्यं लोकप्रिय-मात्मकं च, परमभिव्यञ्जनाकौशलं वर्णनाबाहुल्यं गहनं च विश्लेषणं गद्यमाध्यमेनैव सम्भवम्। वस्तुतस्तु छन्दोमयवाणाश्रितं श्रुतिमाधुर्यं स्मरणसौकर्यं च पद्यानां लोक प्रियत्वाय कल्पते। अन्यथा त्वस्मिन् काव्याङ्गे समग्राभिव्यक्तिसामर्थ्यं न कदापि सम्भावनीयम्। अतएव काव्यत्वेनाभिहिता चित्रकाव्यात्मकतापि पद्येष्वेवोपलभ्या। नैतन्नाम्नैव गद्याश्रितं काव्यं कदापि स्पृशति।

**गद्यस्य समुद्भवः**

गद्यस्याऽस्य समुद्भवः पुरातने युगे वैदिकसंहितोदयेन सार्धमेव समजायत, इत्यस्मिन् विषये न कोऽपि विवादो विपश्चिज्जनेषु सर्वेषु। गद्यस्याद्यः स्वरूपस्तु कृष्ण-यजुर्वेदस्य तैत्तिरीयसंहितायां प्रत्यक्षीकर्तुं शक्यते। अत्र खलु गद्यस्य प्रयोगः पद्यभागादेव न्यूनः। तदनन्तरं चाथर्ववेदेऽपि गद्यस्य समावेशः षष्ठभागमात्रायां विहितोऽस्ति। तदीय षष्ठो भागस्तु गद्यनिबद्ध एव सन्दृश्यते। स्पष्टतस्तत्र च गद्यं सुप्रतिष्ठितमिवाभाति। अनेनैव हेतुनोत्तरकाले ब्राह्मणारण्यकोपनिषदां संरचना गद्यविधायामेव समजायत। व्याकरणविश्लेषणादीनि तु गद्यमाश्रित्यैव विधेयानीति तु तथ्यताऽस्त्यत्र निर्णेतु पारते।

परं वैदिकेऽस्मिन् गद्ये कृत्रिमकाव्याभिव्यञ्जकालङ्कारबहुलता समस्त-पदात्मकता च नैवाऽनुसन्धेया। श्लेषालङ्कारसमुद्भासितं पाण्डित्यप्रवणत्वमप्यत्र वै गद्ये सर्वथैवाप्राप्यम्। वस्तुत एतद् गद्यं तु सहजमकृत्रिमं प्रसादगुणेन च समन्वितं विद्यते। "सत्यं वद, धर्मं चर, स्वाध्यायान्मा प्रमदः" इत्येतादृशाः प्रयोगा दैनिक-

व्यवहारक्षमा भाषाया नैसर्गिकता प्रतिपादयन्ति । पद्यसुलभ लयाधारित-ध्वनिमाधुर्यं स्मरणसौकर्यं चाऽभेप्सुकामा सहृदयास्तु न जातु प्रहृष्येयुरलङ्कृतिशून्येनाऽनेन गद्येन । न तेषां मनस्तत्रानुसज्जति । गद्यस्य विकासोऽनेन हेतुना विष्टम्भमिवायात् ।

तथाप्येतन्नाशङ्कनीय यदेतद् गद्य सर्वथैवानादृतमासीत् । प्रयुत व्याख्या कृते तु गद्यस्यालम्बनमेवाऽश्रियत । तथ्यस्यास्य पुष्टिस्तु सर्वथैवाऽधुनातनसदृशे गद्ये सरचितेन यास्काचार्यस्य निरुक्तेन महर्षिपतञ्जलेश्च महाभाष्येण सहजमेव विधीयते, यथा —

"एव हि श्रूयते । बृहस्पतिरिन्द्राय दिव्य वर्षसहस्र प्रतिपदोक्ताना शब्दाना शब्दपारायण प्रोवाच । नान्त जगाम । बृहस्पतिश्च प्रवक्तेन्द्रश्चाध्येता दिव्य वर्षसहस्रमध्ययनकालो न चान्त जगाम ।"

(महाभाष्यात्)

सूत्रसाहित्य तु समग्रमेव गद्यविधामेवाऽऽश्रयते । पाणिनिरचिताऽष्टाध्यायीनाम्नि विश्वविश्रुते व्याकरणग्रन्थे तु "अदर्शन लोप" "साधकतम करणम्" "कर्तुरीप्सिततम कर्म" इत्यादिभि सूत्रैर्गद्यस्य नैर्मल्य सक्षेपणोपता निस्सन्दिग्धमेवाभिव्यज्यते । कौटिल्यकृतेऽर्थशास्त्रेऽपि लघुतरैर्वाक्यै सरचित गद्य किमपि रमणीयत्वमाधत्ते, यथा—

'दर्शने प्रसीदति । वाक्य प्रतिगृह्णाति । आसन ददाति । विविक्तो दर्शयते । शङ्कास्थाने नातिशङ्कते । कथाया रमते । परिज्ञाप्येष्ववेक्षते । पथ्यमुक्त सहते । स्मयमानो नियुङ्क्ते । हस्तेन स्पृशति । श्लाघ्येनोपहसति ।"

अभिव्यञ्जनाक्षममेतादृश गद्यमाङ्ग्ललेखकस्य फ्रे.रि.देव सहोदयस्य त्रिधृत गद्य सवथैव न्यक्करोति ।

अस्मिन युगे समस्तपदावलीना प्रयोगोऽपि यदा कदा विधीयते स्म । तानिदर्शन बौद्धविदुषाऽऽर्यशूरेण रचिताया जातकमालाया कर्तु पार्यते, यथा—

"अथ कदाचित्तस्य महासत्त्वस्य भोजनकाले स्नानानुलिप्तगात्रस्य कुशलोदारसूपकल्पिते समुपस्थिते वर्णगन्धरसस्पर्शादिगुणसमुदिते विचित्रे भक्ष्यभोज्यादिविधौ तत्पुण्यसम्भाराभिवृद्धिकामो ज्ञानाग्निनिर्दग्धसर्वक्लेशेन्धन प्रत्येकबुद्धस्तद् गृहमभिजगाम भिक्षार्थी ।"

दर्शनशास्त्रसदृशे शुष्के विषयेऽपि यादृशं गद्यं प्रयुक्तं, तत्तु सर्वथैव सरलं रोचिष्णु च, यथा—

"इच्छयाऽऽत्मानमुपलभामहे। कथमिति? उपलब्धपूर्वे ह्यभिप्रेते भवतीच्छा। यथा मेरुमुत्तरेण यान्यस्मज्जातीयैरनुपलब्धपूर्वाणि स्वादूनि वृक्षफलानि न तानि प्रत्यस्माकमिच्छा भवति।"

(शङ्कराचार्यस्य भाष्यात्)

नैयायिकाना विवेचनेष्वपि यदा कदा लालित्येन समन्विता व्यङ्ग्योक्ति भिश्चालङ्कृता वाक्यसंरचना दृष्टिपथमायाति यथा—

"आः क्षुद्रतार्किक! सर्वथाऽनभिज्ञोऽसि ब्रह्मं न जीवात्मानो नहि ततोऽन्ये। नहि दहनपिण्डाद् भेदेनापि भान्तः स्फुलिङ्गा अग्निस्वरूपा भवन्ति। तत् किं ब्रह्मण एवाविद्या? न च ब्रह्मणो ऽविद्या?"

(जयन्तभट्टस्य न्यायमञ्जरीतः)

पौराणिक गद्यमपि न खलु काव्यसुषमया विरहितम्। प्रत्युत तस्मिंस्तु प्रसादगुणोपेतमलङ्कृतञ्च गद्यं साक्षात्कर्तुं शक्यते यथा श्रीमद्भागवते रम्यप्रकृति वर्णनाय समायोजितैषा सुदीर्घ-ललितपदसमासावली द्रष्टव्यनामेति—

'तेषां विशीर्यमाणानामतिमधुरसुरभिसुगन्धि बहुलारुणरसोदेनारुणोदा नाम नदी मन्दर गिरिशिखरान्निपतन्ती पूर्वेणेलावृतमुपप्लावयति। यदुपजोषणाद् भवान्या अनुचरीणां पुण्यजनवधूनामवयवस्पर्शसुगन्धवातो दशयोजनं समन्तादनुवासयति।'

गद्यकाव्यस्य समारम्भः

सुबन्धु-दण्डि-बाणादिभ्यः प्राक् कानिचिद् मनोहारीणि गद्यकाव्यान्यविद्यन्त, परमधुना तु तेषां नामोल्लेख एव समुपलभ्यते। यथा खलु कात्यायनेन स्ववार्तिके कस्यचित् "दाख्यायिकायाः" पतञ्जलिना 'वासवदत्ता सुमनोत्तराभैमरथीनाम्," भोजेन शृङ्गारप्रकाशे "मनोवतीसातकर्णीहरणयो" दण्डिना दशकुमारचरिते 'मनोवत्या' श्रीपालितेन 'तरङ्गवत्या' रामिलसौमिलाभ्यां कस्याश्चित् 'शूद्रककथाया' बाणेन च "भट्टारहरिश्चन्द्रस्य' उल्लेखः कृतोऽस्ति—किन्तु साम्प्रतं स्वेतासु नैकाऽपि कृतिरवाप्यते। तथाप्येतत्तु स्पष्टं यद् बाणादिभ्यः प्राक् ललितगद्यस्य काऽपि सुदीर्घपरम्पराऽविद्यत यया खलु दण्डिसुबन्धुबाणादयोऽनुप्रेरिता अजायन्त।

सुबन्धोर्वासवदत्ताया प्रत्यक्षरश्लेषालङ्कारस्य प्राचुर्येण विचित्रमिव काव्यस्वरूपं प्रस्तूयते। क्लिष्टता तु तत्रेदृशी विद्यते यद्विद्वद्वरेण्या अपि क्वचिन् क्वचित् शब्दकोषानालोकयितुं प्रवाध्यन्ते। सभङ्गाभङ्गोभयविधश्लेषस्तेन प्रयुक्तोऽस्ति, यथा—

"बालिनमिवाङ्गदोपशोभित, कुक्कुटकण्ठमिव हारिकण्ठ, वनकमृगमिव रामाकर्षणनिपुण, जयन्तमिव वचनामृत नन्दितवृद्धश्रवस, कृष्णामिव क सहर्ष न कुर्वन्तम् "

अन्येऽपि विरोधाभासोत्प्रेक्षादयोऽलङ्कारास्तत्र चमत्कृतिमुत्पादयन्ति। समासबाहुल्यजनिता पदानां सुदीर्घता तु तत्र प्रतिपृष्ठमाभाति, यथा—

"यत्र मदकलकलहंससारसरसितोद्भ्रान्तभा कूटविकटपुच्छच्छटा—व्यापूर्नविकचकमलखण्डविगलितमकरन्दबिन्दुसन्दोहसुरभितसलिलया "

सत्यमेव "कला कलार्थे" इत्येष सिद्धान्तो वासवदत्ताया प्रतिपदं प्रत्यक्षीकर्तुं पार्यते। पाण्डित्यप्रदर्शनस्य त्वियत्तैव न विद्यते तत्र। बाणभट्टस्त्वनया कृत्याऽभिभूत सन् कथयामास—

"कवीनामगलद् दर्पो नूनं वासवदत्तया।<br>शक्त्येव पाण्डुपुत्राणां गतया कर्णगोचरम्॥"

सुबन्धोस्तुलनाया दशकुमारचरितस्य लेखको दण्डी श्लेषविरहितं बोधगम्यं च गद्यं प्रयुङ्क्ते। एतदीये गद्ये सारल्यं सुबोधता च सर्वत्रैव वरीवर्ति। पदलालित्येन त्वेषा कृतिर्जगति प्रसिद्ध्यति। संस्कृतसाहित्ये त्वेतत् पदलालित्यं दण्डिनं कालिदासादिसमत्वमेनयति, यथा—

"उपमा कालिदासस्य भारवेरर्थगौरवम्।<br>दण्डिन पदलालित्यं माघे सन्ति त्रयो गुणाः॥"

एतदीयं गद्यं प्रसादगुणोपेतम्, श्लेषादिना विरहितम्, भावाभिव्यक्तिवैशद्येन सपृक्तं रसमिश्रं च विद्यते, यथा—

"अहमपि देवस्यान्वेषणाय महीमटन् कदाचिदम्बरमध्यगतस्याम्बरमणेः किरणममर्दिष्णुरेकस्य गिरितटमहीरुहस्य प्रच्छायशीतले तले क्षणमुपाविशम्। मम पुरोभागे दिनमध्यसंकुचितसर्वावयवं कूर्माकृतिं भानुपच्छाया निरीक्ष्योन्मुख-

गगनतलान्महारयेण पतन्तं कञ्चिदन्तराल एव दयोन्नतहृदयोऽहमवलम्ब्य शनैरवनितले निक्षिप्य " त भृगुपतनकारणमपृच्छम्।

**कथाऽऽख्यायिकायो चरमोत्कर्षः**

सम्राजो हर्षवर्द्धनस्य समकालीनो बाणभट्टस्तु सर्वानेव गद्यलेखकान् निस्सन्दिग्धमतिशेते। स खलु गद्यसाहित्याकाशे भास्कर इव दीप्यते। न कोऽपि विषयोऽवशिष्यते, यस्तेन कादम्बर्यां हर्षचरिते वा नैव वर्णित। अतएव कथितम्—

"बाणोच्छिष्टं जगत् सर्वम्।"

तदीया कादम्बरी तु रसज्ञाना कृतेऽनाहारमिव जनयति, यथा—

"कादम्बरीरसज्ञानामाहारोऽपि न रोचते।"

गद्यकाव्यस्य कथाख्यायिकेति द्वे रूपे बाणभट्टेनैव सर्वप्रथम प्रस्तुतीक्रियेते। आत्मकथाया समारम्भोऽपि तेनैवाऽऽश्रियत। उभयोरपि गद्यकाव्यादर्शयो: काचनोदात्तप्रतिभा, मौलिकोद्भावना, विशदा च वर्णनशैली साक्षात्कर्तुं शक्यते। नात्र केवल पदलालित्य प्रत्यक्षर वा श्लेषमयत्वमनुसन्धेयम्। अत्र तु सुबन्धुदण्डिनो गद्यशैली कञ्चनाद्भुत समन्वयमवाप्य भृश चकास्ति। पर यदा स बाणभट्टो ताण्डवताण्डव प्रस्तुतीकरोति, तदा तु साक्षाद् वाग्देवी प्रागल्भ्यमवाप्तु बाणरूपेणावतरितेवाभाति। यथा च कथितम्—

"जाता शिखण्डिनी प्राक् यथा शिखण्डी तथावगच्छामि।
प्रागल्भ्यमधिकप्राप्तु वाणी बाणो बभूवेति।"

यदा च स ललितपदावलीमाश्रित्य माधुर्यगुण प्रयुङ्क्ते, तदा तु वाग्देवी रुचिरस्वरवर्णपदा तरणीव जगन्मनो हर्तुं कल्पते, यथा—

"रुचिरस्वर वर्णपदा रसभाववती जगन्मनो हरति।
सा किं तरुणी? नहि, नहि, वाणी बाणस्य मधुरशीलस्य।"

तदीय गद्य सौन्दर्यं कियदनुपमेयमिति प्रदर्शयितु विरोधाभासालङ्कारस्यैकमुदाहरण प्रस्तुतीक्रियते। तद्यथा—

'यत्र च मलिनता हविर्धूमेषु, न चरितेषु मुखराग शुकेषु न कोपेषु, तीक्ष्णता कुशाग्रेषु न स्वभावेषु चञ्चलता कदलीदलेषु न मनःसु, वधूराग

कोकिलेषु न परकलत्रेषु, कण्ठग्रह कमण्डलेषु न सुरतेषु, मेखलाबन्धो व्रतेषु नेर्ष्याकलहेषु, स्तनस्पर्शो होमधेनुषु न कामिनीषु, पक्षपात शुकवायुषु न विद्याविनोदेषु भ्रान्तिरनल प्रदक्षिणासु न शास्त्रेषु, वसुसङ्कीर्तनं दिव्यदयासु न तृष्णासु, गणना रुद्राक्षवलयेषु न शरीरेषु, मुनिबालनाश क्रतुदीक्षया न मृत्युना, रामानुरागो रामायणेन न यौवनेन, मुखभङ्गविकारो जरया न धनाभिमानेन ''

समस्तपदावल्याश्च मनोहारिता दिव्येऽच्छोदसरसि स्नानार्थं गतस्य विवरणेनाऽभिगन्तु शक्यते, यथा—

मधुमदविडम्बित मधुकरवदम्बकसवाह्यमानलतादोलेषु, उत्फुल्लपल्लव लवलीलीयमानमत्तकोकिलोल्लासित मधुशीकरोद्दामदुर्दिनेषु ,प्रोषितजनजायाजीवोपहारहृष्ट मन्मथास्फालितचापरवभयस्फुटितपथिक हृदयरुधिरार्द्रीकृतमार्गेषु, अविरत पतत्कुसुमशर पतत्रिपत्रमूत्कार बधिरीकृतदिङ मुखेषु, दिवापि प्रवृत्तमदनरागान्धाभिसारिकासार्थ सङ्कुलेषु, उद्वेलितरसमागरपूरप्लावितेषु, सकलजीवलोकहृदयानन्ददायकेषु मधुमासदिवसेष्वेकदाऽहमम्बया सह मधुविस्तारशोभ प्रोत्फुल्लनवनलिन कुमुद कुवलयकह्लारमिदमच्छोद सर. स्नातुमभ्यपतम् ।''

लघुतमाना वाक्याना निर्माणेऽपि बाणभट्टो विचक्षण इवाभाति । एतदर्थमेकमेवोदाहरणमत्र प्रस्तूयते—

''न परिचय रक्षति । नाभिजनमीक्षते । न रूपमालोकयते । न कुलक्रममनुवर्तते । न शील पश्यति । न वैदग्ध्य गणयति । न श्रुतमाकर्णयति । न धर्ममनुरुध्यते, न त्यागमाद्रियते । न विशेषज्ञता विचारयति । नाचार पालयति । न सत्यमनुबध्यते । न लक्षण प्रमाणीकरोति ''

सत्यमेवेदृश प्रवाहमय नैसर्गिक च गद्य प्रणेतु न कोऽप्यन्यो गद्यलेखक: कदापि पारयामास । एतादृग् वैदग्ध्य कलात्मकश्लोकर्षाऽद्भुता च वाक्यरायोजना न कुत्राप्यन्यत्र समवाप्तु शक्यते । वस्तुतो बाणभट्टस्य गद्यकाव्य प्रकाशमानो दीपस्तम्भ इव सतिष्ठते । तत्प्रकाशेनैवेतरा कृतयो मार्गान्वेषणमिव विदधाति । निश्चप्रचं बाणभट्ट सर्वेषा गद्यलेखकाना श्रेष्ठ । तदनुकरण तु सर्वथैवासाध्यम् ।

परवर्तिषु चम्पूकाव्येष्वपि पद्येन सार्द्धं गद्यमप्युपलभ्यते । गद्य-पद्याभ्या मिश्रितेष्वप्येतेषु परिष्कृत बहुशोऽलङ्कृत च गद्य वरीवर्तते । विशेषतस्तु त्रिविक्रम भट्टस्य 'नलचम्पूकाव्यम्' भोजस्य 'रामायणचम्पूकाव्य' वेंकटाध्वरे ''विश्वगुणादर्श-

चम्पूकाव्यम्', सोमदेवस्य "यशस्तिलक चम्पूकाव्यम्', हरिश्चन्द्रस्य जीवंधर चम्पूकाव्यम्" तथा च अनन्तकवे 'भारतचम्पूकाव्यम्' उल्लेखनीयानि विद्यन्ते। एषु सर्वेषुमुग्धु दण्डि बाणभट्टादीनां गद्यशैल्या प्रभाव. सवत्र दरीदृश्यते। गद्यमेवेतदृश गद्यमत्रोदाह्रियते—

'यस्मिन्ननवरतप्रमकर्मोपदेशशात् समस्त व्याधिव्यतिकरा पुण्यायुपजी वि व सकल संसार सुखभाज प्रजा । तथाहि-कुष्ठयोगो गान्धिकापणेषु स्फोटप्रवादो वैयाकरणेषु सन्निपातस्तालेषु ग्रहसङ्घातिज्ज्योति शास्त्रेषु भूतविकारवाद साख्येषु क्षयस्तिथिषु गुल्मवृद्धिर्वनभूमिषु गलग्रहो मत्स्येषु गण्डकोत्थान पवतवन भूमिषु शूलसम्बन्धश्चण्डिकायतनेषु दृश्यते न प्रजासु।' (नलचम्पूत)

कादम्बरीमाधृत्य लिखितासु गद्यकृतिषु धनपालस्य तिलकमञ्जरी' वादीभसिंहस्य गद्यचिन्तामणि', सोड्ढलस्य उदयसुन्दरी', वामनभट्टबाणस्य वेमभूपाल चरितम्', विश्वेश्वर पाण्डेयस्य 'मन्दारमञ्जरी' चोल्लेखमर्हति। एतासु कृतिषु रम्यमपित गद्य मीनिक्ता तु नार्थमभ्यञ्जयति। सुदीर्घा समस्त पदावली विरोधाभासश्लेषादयलङ्कारवत्ता चात्र भूरिश समुपलभ्यते, पर सवर्वत्र गद्य बाणभट्टादिना प्रभावितमवाप्यते। मन्दारमञ्जरीतो गृहीत एको गद्यांशोऽत्र समुदाह्रियते –

अथाऽऽसन्नसत्त्वतया वीररसोद्रेकेण च तादृशव्यतिकरानौचित्य ज्ञानेन च तद्रूपनिभालनोद्भवनादभुतेन च त्वरितरसादाय, शरासन संधाय चाजिह्मगम-मोघ त्रिपुरवधोद्यतो भगवा मृगाङ्कमौलिरिव संस्थानविशेषशालिना शरीरेण स्थित्वा, शिशार्वलक्षण्येन रक्षन्नेव कन्यका दाशरथिरिव दशास्य लक्ष्मण इव मेघनाद, नील इव प्रहस्त, हनुमानिवाक्ष शत्रुघ्न इव लवण वर्ण इव घटोत्कच, भीम इव बक त राक्षसमपसदमवसानमनयत।'

आधुनिकगद्यम्

आधुनिकगद्यस्य समारम्भोऽम्बिकादत्त व्यासरचितस्य शिवराज विजयस्य प्रणयनादङ्गीक्रियते। एषा कृतिर्वतमानशताब्द्या प्रारम्भेऽरच्यत। नूतनोपन्यास-परम्परामप्यनयैव कृत्या प्रारब्धेति विषये विद्वास मतैवैकमत्य दधति। शिववीरा-वरङ्गजीवार्धेतिहासिक पात्राण्याधृत्य विरचित एष उपन्यासोऽभिनव कथाशैली माविष्करोति। एतिहासिक-वृत्तेन सार्द्ध देशकालवर्णनमनेनाभिनवा कृतिमनीव रुचिकरा विधत्त। शिववीरादीनां चरित्र चित्रण त्वत्र सर्वथैव सशक्तता व्यनक्ति।

समस्तपदावल्या सह लघुवाक्यसंयोजनाऽप्यत्र बहुशो दृष्टिं प्रसादयति। उर्दू प्रभृति संस्कृतेतर भाषाणां शब्दा अपि नवीन संस्कृत रूपमाधृत्य कामपि चमत्कृति मिवोत्पादयितुं क्षमन्ते। तदीया गद्यशैली कियद् रम्येति द्रष्टव्यमत्र—

"न वयं मीनानिव पीनान् इभानिव तुन्दिलान् भेकानिव निर्विवेकान् वृषदंशानिव कपटस्मितान् काकानिवान्योऽन्यदुर्विभावान् वनीमुखानिव चञ्चल मुखान् शृगालानिव कलितजनतामालान् द्विजिह्वानिव च द्विजिह्वान् मजीवानिवो-पवर्हान् आत्मस्तुतिमात्ररुचीन् मूर्तिमत इवाभिमानान् विद्याशून्यान् गुणिगण-ग्रहणासमर्थान् मिथ्यामादम्भान् वागङ्गनालानचरणपरापातस्पृहान् मद्यकीटान्, दृप्तानन्धभक्तान् नृपम्मन्यान् स्वप्नेऽपि समुपास्महे।

स्वपाद्यनकृतैषा गद्यशैली नितरां भाषासौष्ठवेन काव्योत्कर्षेण च समन्विताऽस्ति। एषा खलु सर्वैरेवाधुनिकैः कृतिकारैरनुकरणीया।

आधुनिकेषु लेखकेषु पण्डिता क्षमारावनाम्नी गद्यलेखिका समुल्लेखमर्हति। तया लिखिताः कथाः 'कथा-मुक्तावली'-ति सङ्कलने सङ्गृहीताः सन्ति। एतासु कथासु वर्तमानयुगस्य विविधं चित्रणमुपलभ्यते। भाषायामभिनवान् प्रयोगान् विधातुं सदैव समाऽन्यतमा पण्डिता क्षमा। नवैवास्याः शैली विचारणा च वितानसम्पन्ना। समग्रतया तदीयः सन्दर्भो माधुर्येण वैविध्येन च पाठकहृदयान् समाकृष्य प्रीणयितुं च कल्पते।

विशिष्टनाम्ना उपन्यासकारेषु श्री के के श्रीनिवासशास्त्री मेधाव्रता-चार्यस्तथा ए० रत्नपारखी विशेषेण उल्लेखनीयाः। श्रीनिवासशास्त्रिणः चन्द्रमहीपति रित्युपन्यासो रहस्यरोमाञ्चादिना परिपूर्णोऽस्ति। मेधाव्रताचार्यस्य "कुमुदिनीचन्द्र" इत्युपन्यासस्य कथावस्तु नलमीदृग्विधमेव वरीवर्तते। उभावप्येतौ हिन्दीभाषाया रहस्योपन्यासैस्तुलनीयौ स्तः। रत्नपारखिलिखित कुसुमलक्ष्मी रित्याख्य उपन्यासस्तु निजया मनोवैज्ञानिकतया बहुशः प्रशंसितः। अत्रोन्मुक्तप्रेम्णो वर्णनं सामान्या-न्नैतिकादर्शात् सर्वथैवातिक्रामते। तथापि न किमपि कुत्सितमिवाभाति। तदेव कृतिकारस्य साफल्यम्। विवाहार्थं प्रस्तुतयोरपि प्रमिणारदयोः समागमे बाधा कृत्रिमेणा सामदीन नरति। कतिपयान्युदाहरणान्येताभ्यः कृतिभ्यो द्रष्टव्यतामर्हन्ति, यथा—

'बिन्दुभूषितभ्रूमध्या, रक्तापाङ्गस्पर्शिप्रफुल्लपुण्डरीकनयना पद्मरागजटित स्वर्णकर्णपूर, उन्नतस्निग्धमसृणरश्मि तीक्ष्णघोणा, रक्तोन्नतकपोला, कलङ्कमुक्ते-

न्द्रचन्द्राविमलहीरकशकलसोदयरदनवदना शुभ्रहारिहारवक्षःस्थला दाडिमीफल-कठोरकुचा प्रमपूर्णनाभिरन्ध्रनावतारणाय त्रिवलीसोपानरम्या प्रमपयोधौ नीदण्डवितत करयुगलेन मन्मथं वेपा तिरश्चिन निर्विवाद ललाम ललनासु।

( चन्द्रमहीपतिः )

कथं वनान्तरमनोहारि सञ्जातमिति द्रष्टव्यम्—

अथ माकन्दमञ्जरी मकरन्दबिन्दुदानि स्वाद स्वाद सानन्द मञ्जुल मानपतीनां कामिनीनां काकलीकलरवेन दिङ्मण्डलं मुखरयन्, चन्दनपरिमलभृता मलयानिलेन रसालतिलकचम्पकादिमहीरुहालिङ्गनजनिततानन्दनव कौञ्जिताभगय-प्रिकामुद्वहन्तीनां वामनानां ललितलतानामुत्तमाङ्गानि मन्दमन्दमान्दोलयन्निहार शिरयन्निव इन्दिरासुन्दरेन्दीवरमरन्दतुन्दिलानां मिलिन्दजालानां मञ्जुलगुञ्ज-नैर्निकुञ्जकुञ्जेषु विश्रान्तिसुखार्थं निषण्णानां पान्थजनानां मोहनिद्रां जनयन् वनविहाराय रसिकजनमनांसि समुन्मादयन् पुष्पसमयः समुपनतः।

( कुमुदिनी चन्द्रश्च )

दयिता प्रत्यपा स्वापराधस्वीकृति लज्जागर्भितां ग्लानिबहुलतां व्यनक्ति, यथा—

'किं क्रन्दसि कुसुमलक्ष्मि मादृशं दुराशं जनमुद्दिश्य? मा क्रन्द। कल्प खलु मादृशा अभययमध्या जना ये त्वादृश्युपकारिणि विश्वासे शुद्धमनो च जन तद्विधानि ममाचरन्ति नृशंसतराणि पापानि यथा तेन नास्ति कश्चनापि मार्ज नोपाय। न वचि कर्यामय भगवती वसुधा तानपि जनान् क्षमा कर्ता।'

( कुसुमलक्ष्मीः )

राजस्थानप्रदेशस्याधुनिकगद्यलेखकानां न काठिन्यमाकोऽस्ति। महा-महोपाध्याय गिरिधर शर्मा चतुर्वेद, मथुरानाथभट्ट सूर्यनारायण शास्त्री वृद्धिचन्द्र शास्त्री रामेश्वर शास्त्री लक्ष्मण शास्त्री शिवप्रसाद शास्त्री च तेषु मुख्या गति। म० म० गिरिधरशर्मणः संक्षिप्तं कृतिं 'गिरुरादेशश्च' निबन्धाद्धर्मनिवशमनायमस्ति। भट्टमथुरानाथस्तु विविधविषयानाधृत्याधरमिव कथानामलिखत्। तासु सामाजिककथासु दयनीया 'अनाथा च' आदर्शामिकाम् चन्द्रहास परिहासाभिकासु लाना ध्यायोग, सरस्वत शिष्या प्रभुतलगणी' गनिकामिकासु अन्यायाचारिणः परिणाम', सिंहदर्श सिंहविपाक, पुष्पराजस्य पौरुषम्' 'अङ्गुलिमानञ्ज', मनोविज्ञानिकासु

"विषमा समस्या" "अद्भुतचिकित्सा" च, प्रेमाख्यायिकासु "एकवार दर्शनम्", भक्तिकथासु च 'बालकभृत्य' सविशेषमुल्लेखनीया ।

सूर्यनारायणशास्त्रिणो दुर्लभदाम्पत्यम्" वृद्धिचन्द्रशास्त्रिण "उमा" रामेश्वरशास्त्रिण 'पतिव्रता', लक्ष्मणशास्त्रिणो यादृशी त्व तादृशोऽहम्', शिवप्रसादशास्त्रिणश्च कृतमाशितवक्तलम्" उल्लेखमर्हन्ति ।

एतासु कथासु व्यवहृता रचनाशैली किञ्चिदाह्रियतेऽत्र यथा—

अस्ताचल चुचुम्बिषति भगवान मरीचिमाली । कुलायाभिमुखमुड्डीयन्ते विहगा । भगवतो विश्वनाथस्य पुर्या काशीनगर्या राजमार्गे सर्व एव प्रायेण गङ्गातटाभिमुखा विलोक्यन्ते । केचित सन्ध्यामुपासितुम अन्ये गङ्गातरङ्गसीकरशीतल समीरमासेवितुम, परे सुरसरिद्वीचिषु प्लवमानमिव शोणवर्णां भगवतो भुवनभास्करस्य प्रतिमामालोकयितुम, इतरे परिश्रमक्लिन्ना स्नानेन शान्तिमवाप्तुम् बहवो विदुषां दर्शनेनात्मान पावयितुम, अनेके च संस्कृतछात्राणा प्रवहन्तीं सुरसरस्वतीधारा श्रवणपुटेन पात प्रचलन्तो दरीदृश्यन्त ।'

( पितुरुपदेश )

अन्यच्च —

"परिमितमधुरे प्रकाशे स्थिताया अस्य वस्त्रच्छटा साधारण्यपि हारिणीव सवृत्तासीत् । साधारणमूल्यत्वेऽपि स्वच्छसुन्दरसूक्ष्मवसननिर्मितमध परिधानीयम् । उपरि च हारिद्रहरितवर्णसूक्ष्मसुन्दरमुत्तरीयवस्त्र प्रावृतम् अग्रतोऽवलम्बितेन यत्नात्मा वदन साम्प्रतमवगुण्ठितमभूत् । परं वस्त्रस्य सूक्ष्मतया तन्मध्यगतद् गात्रसुषमा स्फुटमभित प्रसरन्तीवाऽऽसीत् । किशोर्या अस्या वय क्रमोऽष्टादश वर्षेभ्यो नासीदधिक । प्रत्यङ्गोज्जृम्भमाणनवयौवनमासलस्या वक्षसि निविडनिबद्धा पाटलकौशेयकञ्चुलिका उत्तरीयवस्त्रान्तरितापि स्वाच्छाद्ययोरतुङ्गतामनक्षर घोषयन्त्यासीत् ।"

(शिष्या)

अन्यच्च —

"प्रियतम, भगवत्या गङ्गायास्तरङ्गा समाह्वयन्तीव मा स्नेहेन । ते तरङ्गा, यैः सर्वत पूर्वं त्वदीय सुकोमल स्पर्श प्रापितो मत्सविधे, ये ह्यावा प्रणयसूत्रे ह्यबध्नन्, येषा च सविधे क्रीडा कुर्वन्तो "को जानीते निभृतमुभयोरावयो स्नेहसारम्" सवत्सरा व्यत्यगुर्नाय । किन्तु तद्दिनमद्य व व्यतिगतमिति प्रतीयते ।

एतदनुप्राणितासु कथानिकासु पात्राणि प्रायशो दौर्बल्याऽनैतिकताऽनास्थादिभ्यो ग्रस्ता इव प्रदर्शिता । परं क्वचित् तान्येवाऽनुतापभयानि सजायन्ते मन स्थितावेतादृश परिवर्तनमादर्शं नैतिकता वा प्रति कामप्यास्था ससूचयन्ति । सुधारवादिताऽप्यनेन तथ्येन स्पष्टमेवाऽनुमीयते ।

अतियथार्थवादोऽपि कतिपयासु कृतिषु निरूपितोऽस्ति । तत्र तु यथार्थस्य घृततम जुगुप्सित वा रूप न केनापि विधिना प्रच्छाद्यते । एतादृशीषु रचनासु मानवमनसो गहनतलमुद्घाटयितु प्रयत्यते । अतस्तत्र प्रय श्रेयो वा नैव विचारणीयम् । स्पष्टमेवैतादृशिवमतियथार्थचित्रणमाङ्ग्लसाहित्यस्य संस्कृतेतर-भारतीयभाषाणा च प्रभावेणैव विधीयते । परिणामत एतादृशीना कृतीना सख्या परिमितैव विद्यते । तथाप्येतत्तु स्वीकरणीय यदाधुनिक संस्कृतलेखक स्वकीयपरिस्थितेर्वातावरणाच्च नैवाऽपरिचित । यथार्थस्यातियथार्थस्य वा चित्रणाय स बाध्यतामिवाऽनुभवति । पर संस्कारै प्रभावित एव लेखक समस्याया समाधान त्वादर्श एव गवेषयति ।

आधुनिकासु गद्यरचनासु भाषाऽपि सारल्यमिव जगाम । परम्परिता सुदीर्घसमस्तपदावली प्रायशो न्यूनेव गतवती । साम्प्रत तु भाषाया सौकर्य सक्षेपश्च समाविश्यते, यथा—

"चक्षुषी अमृदनाम् । अजृम्भे । कक्षाद् बहिरयाम् ।"

( कुसुमलक्ष्मी )

अन्यच्च—

"यस्य वस्त्राणि मलिनानि । शुष्क मुखम् । यष्टिहीनो हस्त भग्ने च पादत्राणे आस्ताम् ।"

( साधु-समीक्षा )

अपि च—

"समीपस्थैव सरसी । स्वच्छ पय । मधुरो भ्रमरझङ्कार: । पावन: पवन । परम कुसुमसौरभम् । अरे । मम पच्छब्देन पलायितोऽय भ्रमर । महदपराद्ध मया ।"

( मामकीन स्वप्न )

एभिरुदाहरणै स्पष्टमिद यदाधुनिको लेखक प्रायश सरलपदावलिमेव प्रयुङ्क्ते । सत्यमेवानेन सारल्येन संस्कृतगद्ये काऽपि गतिमयतेवाऽऽधीयते । पर यदा कदा लेखकैरिदमप्याशङ्क्यते यद् दुरूहा समस्तपदावलि विना तदीय पाण्डित्य

न स्वीकरिष्यते पाठकवृन्देन। अतस्तेन मन्ये मध्ये दुरूहा शब्दा समस्ता च पदावली प्रयुज्यते सर्वं खल्वेतद् भाषायाः सरलीकरणमात्रेव च प्रतिपादयन्ति। भाषाया माध्यमेन पाण्डित्यप्रदर्शनस्य प्रवृत्तिरपि सतत परिक्षीयते। आधुनिक लेखकस्तु साम्प्रतं नैजं कथ्य सम्प्रेषयति। तच्च भाषाया आर्जवेन गतिमयत्वेन च सम्भाव्यते।

जनसामान्यस्य चित्रणम्

समसामयिके संस्कृतगद्यकाव्ये प्रायश सर्वेषामेव वर्गाणां चित्रणमवाप्यते। वीरपूजा प्रत्युपेक्षा वृत्तिश्च बहुशो लक्ष्यते। आधुनिको गद्यलेखकस्तु सहस्रान्देभ्य उपेक्षित वर्गमेव निरूपयितुमीहते। वामधर्मो मन्येऽस्मिन् युगे पीडितवर्गस्याङ्कन सर्वथैव समुचितमाभाति। किन्त्वस्य वर्गस्य कृते लेखकीया सहानुभूतिस्त्वपीयसीव प्रतीयते। एतत् खलु परम्परितामुपेक्षामवमाननां चाऽभिव्यनक्ति। पर रचना-स्वेतस्य वर्गस्य समावेशेन तदीया दुरवस्था कदर्थना च प्राकाश्यं गच्छति।

प्रस्तुत कथानिका-सङ्कलनम्

एतादृशि पृष्ठभूमौ राजस्थानस्य साम्प्रतिकाना कथा-लेखकाना कतिपया कृतयोऽस्मिन् सङ्कलने प्रस्तुतीक्रियन्ते। सीमितावधि कारणेन सङ्कलितकथानिकाना सङ्ख्या तु वर्धितु नाशक्यम्, परमेतासु कृतिषु।

किमपि प्रत्यग्रत्व नवत्व वाऽऽभासयितु शक्यते। यथार्थचित्रण तु प्राय सर्वासु कथानिकासु वरीवर्ति। भाषाक्षेत्रे च वैविध्यस्य न कोऽप्यभावोऽस्ति। एकत्र तु प्रौढिवसमलङ्कृत गद्य दृष्टिपथमावर्जयति अपरत्र च लघुपदावल्या सञ्जनित गतिमयत्व सम्प्रेषणीयत्व चाभिनव रचनासामर्थ्यं प्रकटीकरोति। स्वयमेवोभय विधाऽप्येषा रचनाशैली सहृदयाना मन प्रीणयितु क्षमिष्यते इत्याशास्यते।

सङ्कलितानां कथानिकाना विषये न किमपि प्राक्कथनमपरिहार्यमिवास्ति। यतो ह्यनेन खलु कोऽपि पूर्वाग्रहो जनिष्यते इत्यनुमीयते। तदेव सम्प्रधार्य कथानिकाना कथ्यविषय एव पुरस्करणीयोऽस्ति। अयञ्च सर्वै सुधीवरैः पाठकैः स्वयमेवाऽवबोधनीयम् विश्लेषणीय च।

(१) भ्रातृस्नेह

म म भास्करमहोदयैर्निखिताया(?)मस्यां कथानिकायामवरज तु सधुमहोदर-स्याऽमर्यादितमाचरणमग्रज प्रति निभृ न च प्रातिकूल्य निरूपितम् अपरत्र चानुज

सम्यंबाग्रजस्य नैर्गिक स्नेह, तितिक्षा, क्षन्तृत्वमनहङ्कारश्चाऽभिव्यक्ति । अनुजस्तु वारम्वारमग्रज तिरस्कर्तुमेव प्रयतते, लोकाचार परिभावयति, सुहृदादीना परामर्श च स्वोत्सिक्ततया न्यक्करोति । अग्रजस्तु सान्त्वयितु प्रसादयितु च भृश चेष्टते । नैजमवमानम तु स पौनःपुन्येन निगिरति । अन्ते च नदीमा प्रयत्ना साफल्य भजन्ते । अत्र खलु 'यन्तो नैव परित्याज्य'' इत्येतत् प्रतिपादितमस्या रचनायाम् । अमुष्या कृतभाषाशैलीनिदर्शनार्थमेकमुदाहरण पुरस्क्रियतेऽत्र ।

'शब्दानेनाभिनिशम्य तु मा शतशा वृश्चिका एव युगपददशन्निनम् । अनुतापतपने दन्दह्यमानदेहश्चाह लज्जयाऽवाङ्मुखोऽभवम् ।

अन्वशोचमह हन्त हन्त ! कथमह केन दुर्विपाकेन कस्य वा दुहृद समर्थनेन देवनिर्विशेषस्य समचनीयस्य ज्यायसो भ्रातुर्नवनीतमृदुल हृदय दुर्वचनैरतुदम् । अह दुष्टोऽस्मि, महान् नीचोऽस्मि परम पापीयाश्चास्मि । ममेदृश दुर्व्यवहार दर्श दर्श मध्येसुरलोक विराजमाना पितृचरणा अपि हन्त तपन्त्येव ।''

उदाहरणेनानेन प्रौढित्वसयुक्त समलङ्कृत च भाषासौष्ठव सहजतया प्रत्यक्षीकर्तुं शक्यते । वाग्विचारयोश्च प्रवाहो न कुत्राप्यवरुध्यते । सत्यमेव

'सुखोदर्क हि मर्पणम्''

(२) सापराध

विद्याभूषणस्य श्रीगणेशरामशर्मणोऽस्या कृतौ यथार्थवादमाश्रित्य कोश-व्यवस्थापकेन कृतश्छद्मापहार चित्रितोऽस्ति । सुप्रतिष्ठितो विपिनविहारी स्वाधिकृताद् वैरमस्थानाद लक्षरूप्यकाण्यपहरति, तत्कृते च कारावासदण्डमपि भुङ्क्ते । पर दारै सहोपजातो विश्वासघात साफल्यमेव जगामेत्येतन्निरूपण सापराधानां कृतेऽपि नैव तुष्टिदायकम् । वस्तुतस्तु कारागृहे सापराधस्य निवासविधिर्न केवलमपराधिवर्ग तर्जयति, अपि तु सर्वानिवापराधिनस्तादृशोऽपराधकार्याद् बहुशो वर्जयति । विपिन विहारिण एतद्व्याजकथनमप्यपराधिना कृते नयनोन्मीलन विदधाति—

"श्रीमन् ! कथमिवापक्षपयामि तानतान् दण्डभोग्यान दुर्दिवसान् । क्षणोऽपि च युगायते । स्वकुलप्रतिष्ठा, जीविकावृत्ति , सर्वमपि मे विनष्टम् । चौर्यकलङ्कश्च मम शिरस्यापतित । मम गृहिणी, बालकाश्च सर्वेऽनाथा क्षुत्क्षाम-कण्ठा करुणकरुणमवसीदन्ति । ( "एव वदन् स दीर्घमुष्ण च नि श्वस्य सकण्ठावरोध सगद्गद रुदन् नेत्राभ्यां स्थूलस्थूला अविरला अश्रुधारा प्रवाहयति ।" )

विपिन विहारिणोऽभिनयकौशलमेतत् सर्वथैव प्रशस्यतामर्हति । न तदीये कथने कोऽपि सत्यांश आसीत् । सम्प्रति तद्गृहेऽभावाना त्वस्तित्वमेव नाविद्यत । तस्य भार्या सन्ततिश्च न खल्वनाथा क्षुत्क्षामकण्ठा वाऽभवन् । धनापहरणमपि तेन किमर्थं कृतमित्यपि विचारणीयम् । दायभागातिरिक्त स कोशव्यवस्थापकोचित प्रभूत वेतनमपि प्राप्नोति स्म । एतादृक्स्थितौ न काऽप्यपरिहार्यताऽविद्यत धनापहरणाय । सेवानिवृत्तौ या विपुला राशिस्तेनाप्स्यमाना आसीत् साऽपि पदच्युतिवशात् प्रध्वंस गता । प्रतिष्ठाहानिस्तु न कदाप्यपाकरणीया आसीत् ।

परमेतत् सर्वं विदुषा लेखकेन साऽभिज्ञानमुपेक्षितम् । तदीय कथ्यं तु विपिनसदृशानां कृतापराधानां साफल्यमेवोद्घोषयति । अत खलु सापराधोऽपि विपिनविहारी कारागारान्निर्मुक्त सन् स्वनन्दनादिवससमारोह मधुरजनीमिवोदापयितु प्रस्तौत्येवम् –

'सर्वेऽपि नागरिका लोकास्तमिममुत्सवमुद्यापयितु रुद्धीदामा इव गड्डरिका प्रवाहमनुसरन्तस्तन्मनस्कास्तद्गतप्राणश्वासोच्छ्वासास्तच्चेष्टास्तत्समर्पिताशेषमनोवृत्तयस्तत्रैव जीवनसाफल्य विन्दमाना मोमुद्यन्ते । यावत्तावत्स्वगृहमेवाधिवसन्तावद्य रात्रौ तमिमं महोत्सवसमारोहं सानन्दं ससुखं च द्विरागमनसमय मधुरजनीमिवोदापयाव यमुत्सव निमित्तीकृत्याहं कारागारान्निर्मुक्तोऽत्र त्वामुपनयोऽस्मि, मृणालिके ! बाले ! मुग्धे !"

सत्यमेवेदं गद्यं सुतरां प्रवाहमयं सजीवं च प्रतीयते । कथान्तं यावद् रसात्मकत्वं विशेषतः समुल्लसति । निश्चप्रचमनेन लेखकस्य गद्यरचनाप्रावीण्यं भूरिशोऽभिव्यज्यते ।

(३) आत्मवेदना

डॉ० प्रभाकरशास्त्रिण कृतिरेषा बहुसङ्ख्यकानामन्त्यजानां विपन्नत्वं घनीभूतां मनोवेदनां च निरूपयति । उद्यमासक्ता अपि धीवरसदृशोऽन्त्यजाः प्रतिवासरं द्विवारं भोजनमप्यवाप्तुं न क्षमन्ते इत्येतदपि कथानिकायामस्यां वर्णितम् । विदुषा लेखकेन राधासदृशीनामन्त्यजकुमारिकाणां वैकल्यमपि सशक्ततयोपन्यस्तमत्र । रङ्कानामपि काचन प्रतिष्ठा भवतीति सवर्णैर्न खलु विस्मरणीयम् । स्वात्मजाया शीलं रक्षितुमक्षम इव धौंकल श्चिन्तोद्विग्नतां भेजे, इत्येतदत्र द्रष्टव्यम्—

'श्रुत्वैतत् स भृशं प्रकुपितः परं नाऽक्षमत स प्रतिकर्तुम् । न चात्मनि

ग्रामणी क्षणमात्रमप्यनन्[?]। स तु राधामेव गर्हयिष्यति। तदनुसारं तु राधया एव तमारब्धं प्रयतितं भवेत्, प्रत्याख्यानं च कृते सति तयैव सा गर्हिता स्यात्। तस्य तात्त्वापि ग्रामणी स्वात्मानं नैव गर्हयिष्यति। स खलु न स्वीकरोति यदन्त्य-जानामपि काचन प्रतिष्ठा भवति। स तु मन्यतेऽशौरवति यत् भवतीनां ग्रामीणाम-णाऽन्त्यजा पावनतामापद्यन्ते।"

सपरिवारं ग्रामात् पलायितोऽपि धौकलः स्वीयं ग्रामं प्रत्यावर्तितुं विचलोक्यते कैश्चनाज्ञातैर्दस्युभिः। एवं खलु स न तु ग्रामे स्थातुं न च तत्र प्रस्थातुं शक्नोति। ग्रामे निवसता च तेन स्वप्रतिष्ठापि रक्षितुमशक्या। चेत् स ग्रामणी प्रतिकूलयति, तदा तु तस्य ग्रामवासगतमपि मन्दिरमिव जायेत। धौकल-स्यैषा कारुण्यनाप्लाविता मनःस्थितिर्द्रष्टव्यास्ति—

'किं कुर्याम वयं साम्प्रतम् ?' स्वपरिवारमपृच्छद् धौकलः। सन्दनात् किञ्चिदेव हीनमासीत् तस्य वचनम्। नैराश्येन च पूर्णतः आक्रान्ताऽस्मीशकृतिस्न-दीया। न स्थातुं न च गन्तुं शक्नुपुरतदा किं कुर्युस्ते वराकाः। दौर्भाग्येन समुत्पीडितास्ते परिश्रान्तिवशाद् भूमावेवाऽस्वपन्।"

वस्तुतोऽस्या कथानिकाया नायको न केवलमसवर्णोऽपि तु सर्वथैव विपन्नः प्रपीडितश्च विद्यते। विरोधिसाम्मुख्यमपि स नैव विदधाति। पलायितुकामो च स स्वकीयं पराभवमेवाङ्गीकरोति। इत्थं तु कथानायक एव नायिकोचितवै-स्वलात् पतितोऽसत्यमिवाप्नोति। परमाधुनिककथासु भूरिशः चित्रितं नायकत्वमेवात्र परिलक्ष्यते। अतः सर्वैषा कृतिर्निश्चप्रचं साफल्यं भजते।

(४) भाटकभवनम्

आचार्यं विश्वनाथ मिश्रेण लिखितायामस्यां कथानिकायां हास्यरसस्य स्फुटत्वं सहजमेवानुभूयते। विदुषा लेखकेन भाटकभवनस्य जीर्णत्वं शीर्णत्वं वा बहुधा प्रतिपादितम्। कथामुख एव भवनवर्णनं पाठकान् स्मितिमिव जनयति, यथा—

'प्रत्येक ऋतौ परिवर्ततेऽस्य स्वरूपम्। वर्षर्तौ तु भवनमिदं तादृशं भवति जलक्लिन्नं येन पदे पदे स्खलनं पतनं च स्वाभाविकम्। शीतकाले तु क्लिन्नताजन्यशैत्याधिक्यात् प्रचुराच्छादके सत्यपि दन्तानां कटकटायमानताऽपा-कर्तुमशक्या। ग्रीष्मकालस्य तु कथैवान्या। महता यत्नेन कथं कथमिह विश्रम्यताम्, क्षणानन्तरं तु कथमिह वर्ततामित्यन्वेषणीयो विषयः।"

वल्पतेऽत्र। युवावस्थोचित भावुकत्वं तु समग्रतो भ्राजतेऽस्यां कथानिकायाम्। नवत्वेन सरसत्वेन चालंकृतैषा रचना कामपि प्रशस्यतामर्हति।

(६) स्मारकम्

हिन्दीसंस्कृतयोर्विशिष्ट कथाकारस्याचार्यचन्द्रमौलेरेषा कृतिरस्पृश्यता-निवारणसमस्यां पुरः स्थापयति। स्वतन्त्रताप्राप्तेरद्यावधि समस्यायाः समाधानं नोऽजनि। अस्यां दिशि कथाकारस्येयं रचना सर्वथा प्रत्नैव विभाति। अनया कथया लेखकस्य राष्ट्रियदृष्टिकोणस्य पर्याप्तपरिचयो मिलति।

कथातत्त्वदृष्ट्यापीयं कथा समादरणीया वर्तते। अस्याः कथानकं न केवलं सामाजिकमपि तु सामयिकमप्यस्ति। प्रारम्भत आसमाप्ति अस्य सामयिकत्वस्य सम्यग् निर्वाहोऽपि विहितः। सर्वाण्यपि पात्राणि स्वस्वचरितस्य प्रतिनिधिभूतानि सन्ति। यत्र कृष्णदत्तः प्रतारणपरायणोऽस्ति, तत्रैव मेघसिंहः सत्यनिष्ठकार्यकर्तृरूपे निर्दिष्टोऽस्ति। दयारामस्योत्साहसमानमन्यत्र दुर्लभम्। सत्यमत्र सर्वेषां चरित्रचित्रणं साधुसम्पन्नम्।

कथोपकथनस्यापि सम्यग् निर्वाहो विलोक्यते। वातावरणनिर्माणे कथाया वर्तते किमप्यसाधारणं वैशिष्ट्यम्। ग्राम्यवातावरणचर्चातिरिक्तं विशेषाधिवेशनस्य देशकालनिर्वाहः साधु प्रतीयते। शैलीविषये नो किमपि बहु वक्तव्यमपेक्ष्यते। कथाकारस्य हृदयग्राहिणी वैदर्भी शैली कथानकं परिणतिं नयमाना दरीदृश्यते। उद्देश्यविषयस्तु स्पष्ट एव। सामयिकास्पृश्यसमस्यायाः समाधानमेवात्र विराजते प्रधानं लक्ष्यम्। बलिदानमन्तरेण किमपि कार्यं नो सम्पद्यते, इति तु तथ्यमेवास्ति। अस्पृश्यहरिजनानां कृते सवर्णैः कूपः उद्घाटितः, किन्तु बलिदानानन्तरमेव, न पूर्वमिति सोद्देश्येयं कथेति साधिकारं वक्तुं पार्यते। भाषासौष्ठवकृते दयारामस्य भाषणेन सञ्जनिता प्रतिक्रियोदाह्रियतेऽत्र—

"सहसाऽन्तरिक्षं चकम्पे। मन्ये मेदिनी चचाल। दयारामस्य निवेदनं व्यर्थं जातम्। धर्मध्वजिनः प्रलयं कर्तुं कटिबद्धाः। कृष्णचन्द्रस्य मौनं सङ्केतमाप्य तज्जना निर्दयं प्रहर्तुं तत्परा जाताः। अनवरुद्धो यष्टिप्रहारो ननर्त। नृशंसतायाः नग्नताण्डवं प्रवृत्तम्। एकत्र हिंसा परत्राहिंसा। एकत्रास्त्रं परत्र रिक्तहस्तता। अस्ति कीदृशं वैपरीत्यम्। पशूनामेव तामसीवृत्तिरारूढा। सर्वे परस्परं रुधिरस्य पिपासवो जाताः। मिथो हस्ताहस्ति, दण्डादण्डि, केशाकेशि, कुन्ताकुन्ति प्रहरणं प्रवृत्तम्।"

(७) दिग्भ्रमः

श्रीकलानाथशास्त्रिणा लिखितैषा कथानिका विश्वविद्यालयेषु प्रवर्तमान

वातावरणं प्रस्तौति । तत्र यथा छात्राणां दैनिकं विचारलापो विशेषतश्च छात्राभिः सह तेषां सम्मिलनादिकमोऽत्र किमपि वैशद्यमेति । नाटकादिमध्यभागावसरस्तु तेषां कृते प्रमोदातिरेकमावहति यत्र सन्देशादृशेषु क्षणेषु न केवलं छात्राभिः सह तेषामालापो ऽपि तु स्पर्शात्मकं किमप्यनिर्वचनीयं सुखमप्यासाद्यते । नाटकस्य नायकत्वं तु प्रायश सर्वैरेव काम्यते । नायकत्वेन च कृता अर्थिता ते वाग्युद्धं सतत विदधति ।

एतादृश कथानकमाश्रित्य गद्यरचनानिष्णातेन लेखकेन सुधागिरीशयोः प्रमय एकपक्षात्मकवर्णनमस्याः कथानिकायाः सुवर्णितम् । विवाहं प्रति सर्वथैवानुत्सुको गिरीशः सुधायाः सामीप्यलाभेन भृशं माद्यति । तस्मिन्नापूतनिशीथेऽपि तावुभौ मध्येमार्गं मापयन । अन्योऽन्यस्य छात्रावासीये कक्षेऽपि तयोः सलापो मध्यगत यावत् प्रचलति । या गिरीशश्छात्राभिः सह सलापं न कदाप्यकृत स एव साम्प्रतं सुधया सार्धमात्मपितुः न कमप्यवसरं तत्याज । दिवसद्वयं यावदेकान्तवासमिवाश्रित्य स विवाहार्थं कृतनिश्चयो बभूव । भार्यारूपे का तेन वृतेति तु सुखेनानुमेयम् । सुधैव तस्य पत्नी भवितेति निश्चित्य स पित्रोरनुमत्यर्थं स्वगेहं प्रतिष्ठत ।

इत्थमेतदीयं कथानकं सर्वथैवाधुनिकं रोचिष्णु च प्रतीयते । अनिरञ्जनया चिरन्तनमप्यतत् प्रत्यग्र येन केनापि समाविष्टम । अस्याः कथायाः चित्रितं वातावरणं परिवेशश्च प्रत्यायप्रयतीव पाठकान सर्वान् । युवकानां कृते त्वेषा कृतिनितरां रोचिष्णुः स्यादनुमातुं शक्यते ।

शुद्धरचनायाः दृष्ट्या त्वेषा रचनातीव काम्या । अत्रत्य शब्दचयन पदविन्यासश्च किमपि वैशिष्ट्यं धत्ते । मनोविश्लेषणमपि प्रभूतमात्रायां विहितमस्यां कथानिकायाम । परिवेशमजना तु शनैः शनैः पाठकानां मनांसि परितः आवर्जयति । इत्थमेषा कृतिः समग्रैवाभाति ।

साम्प्रतं गिरीशान्तःसञ्जातपरिवर्तनस्य चित्रणमत्रोदाह्रियते—

"किन्तु नाटकस्य पूर्वाभ्यासोऽस्य मानसेऽज्ञातं किञ्चना तरिकं परिवर्तनमिव विधीयत इत्याशङ्के स्मायम् । क्षणेनैव नाशयामिमां दुरुमलिप्समो । कथं तदिदमभवत् ? क्षणिकाल्पो व्यायामः सुदीर्घपरिश्रमानन्तरं विश्रामवत्मनोविनोदोऽय का वा हानि सम्पादयेत् ? नाय तत्र काममपि हानिमन्वभवत् । सुधापि तु प्रथम श्रेणिका छात्रैवाऽभूत । साऽपि तु नाटकेऽस्मिन् भूयाम समयं यापयति । साऽपि गभीरा समादृता च छात्राऽस्ति । इयोन्नत्याविधः साम्यं गुणानामेव । तहिमावकाशान

होराद्वये पूर्वाभ्यासैर्व्यतियापिते को वा दोष समापतित ? सर्वमिममन्तर्द्वन्द्व निरन्तरमन्वभवदसौ ।"

सङ्क्षेपतोऽस्या रचनायामनुभूतं प्रामाणिकता, सम्प्रेषणीयता चाभान्वयितु शक्यते ।

(८) मूल्यानमूल्यानि

डॉ० (श्रीमती) शशिगुप्ता अस्या कथाया लेखिकाऽस्ति । अस्यामपि कथानिकाया छात्र-छात्रादीना कथानक सगृहीतम् । युवकयुवतीना हासपरिहासादारभ्य हेमाया विश्रब्धनिर्तामिवाचरणमत्र चित्रीयते । विजयस्तु तदाचरण तद्वचनानि च सर्वथैव विश्वसिमिति । स स्वकीये कक्षे समग्रा रात्रि तया सह यापयति । मात्रा च निर्भर्त्सितोऽत्र युवा हेमामुद्वोढुमुपकल्पते पर न केवल हेमाया पिता, अपि तु स्वय हेमा तमुपहसति । प्रेयस्यैव प्रवञ्चित स मातु समीपमागत्य क्षमा याचते ।

इत्थ सल्वस्या कथाया यौवनोचित उत्साहातिरेक सवर्णित । नैतिकताया स्खलने च यत्परिवर्तनमाधुनिके युगे समागत तदपि कथानिकायामत्र प्रत्यक्षीक्रियते । काश्चन सम्पन्ना युवतयस्तथाविधाचरणाय पितृभिरप्यनुज्ञाप्यन्ते, इत्यत्र विस्मयमिवावभाति । परमेतत् सर्वं युगसत्यमाभाति । प्रवञ्चनमेतादृश न तु युवकैर्न च युवतिभि करणीयमित्येव सन्दिश्यतेऽनया रचनया ।

भाषाशैलीमुदाहर्तुमेष एवांशो द्रष्टव्य —

"सन्ध्याकाले विजयस्य सुहृद आगन्तुमारेभिरे । पञ्चसु तेष्वेका युवतिरप्यविद्यत । हेमेत्यभिधानमासीत् तस्या । नैसर्गिक तदीय सौन्दर्यम् । वेशभूषा चातीव रम्या । युगानुकूल तस्या नेपथ्य बलादाकर्षति स्म युवकान् । तै परिवृता सा मुक्तभावेन स्मितान्यकिरत् । यदि कोऽपि तस्या हस्त धर्तुं प्रयतते, तदा सा नैव त्रपते । पर केनापि व्याजेन हस्त तु शीघ्रमेव प्रत्याजहार सा । स्पष्टत तदीयोपस्थित्या स्मितैश्च सर्व एव युवका हृष्यन्ति स्म ।"

स्पष्टमेव किमपि नवन्व धत्ते कथानिकेयं ।

(९) स्वीकृता

डॉ० नन्दकिशोर गौतमेन लिखितायामस्या कथाया यौतुकसमस्या वर्णिताऽस्ति । राधाया विवाहो यौतुकाभावेन सपन्नता न याति । सद्योविवाह परिन्यक्ता

च सा दास्यकर्म स्वीचकार। परं गृहस्वामिनं क्रूरदृष्टिमालक्ष्य सा तदपि परित्यक्तवती। ततश्च स्यूतिकार्यं तया आरब्धम् किन्तु तत्परित्यागायापि सा दुष्टयुवकैः विवशीकृता। एवं सातङ्केन सतप्ता सा गृहान्निर्गत्य रेलयान्या प्रथमश्रेणिकक्षमुपातिष्ठत्। यात्राप्रमाणपत्राभावे निरीक्षकेण प्रताडिता सा रोदितुमारेभे। ततश्च तत्रैवासीनेनापरिचितेनैकेन युवकेन तस्याः कृते प्रमाणपत्रं क्रीतम्। युवकस्तु स राधायाः पतिरेवासीत्, येन सा मध्येविवाहं परित्यक्तासीत्। ततस्तु सर्वथैवानाथापि सा पुनरपि सनाथाऽजायत।

एवमस्याः कथायाः कौतुकाभावेन प्रपीडितायाः युवत्याः अरुन्तुदं जीवनं चित्रितम्। अस्याः भाषा-शैली त्वतिसुगमा प्रतीयते।

(१०) राष्ट्रनिर्माता

डॉ० ईश्वरानन्दशर्मणा लिखितैषा कथा कामपि सुषमां विशेषतां चाश्रयते। अन्तर्द्वन्द्वात्मिकायामस्यां कृतौ देशनिर्मातॄणां शिक्षकाणां दुर्दशाऽभिवर्णितास्ति। आजीवनं समाजदेशादिनिर्माणे तिलशः आत्माहुतिं विदधाना अपि शिक्षकाः सेवानिवृत्तिं समवाप्य कीदृशीं कारुणिकस्थितिं प्राप्नुवन्ति इति त्वत्र वैशद्येन प्रकटीकृतम्। जनार्दनो यदा सेवानिवृत्तो भवति, तदा तत्समीपे नासीत् कोऽपि सुरक्षितो धननिधिः। लघीयानपि तदीयः परिवारः सर्वथाऽभावमेवाऽनुबभूव। एवं खलु जनार्दनस्य जीवनसन्ध्यायां दयनीया दशा सर्वातिशायिनी आसीत्।

एतत्कथानकमासमाप्ति गतिमदवलोक्यते। वातावरणनिर्माणे तु कथाकारस्य सिद्धहस्ततैव प्रत्यक्षीभवति। एवं खल्वेषा कथा सोद्देश्या सूक्ष्मेक्षिकया च ग्रथिता विभाति।

साम्प्रतं कथाशैल्या एकमुदाहरणमत्र प्रस्तुतीक्रियते —

"नागतां अवेति दिवं पश्यन् जनार्दनो दीर्घं निश्श्वासं तत्याज। स्वकीयाधिकदशया स भृशं विव्यथे। सोऽचिन्तयत्—समाजं जीवनपर्यन्तं सेवमानस्य मम कृते स किमकरोत्। मह्यं राष्ट्रनिर्मातुर्दीयमानं पदमुपहासास्पदमिव प्रतिभाति। मम शिष्याः सर्वक्षेत्रेषु कर्मसम्पृक्ताः वर्तन्ते। परं तैरपि किमहं कदापि सत्कृतः ? पुरस्कारस्यैकावकाशप्राप्तत्वेन शतमासमुपलब्धवानहम् ? समाजस्य दृष्टौ मदीयं मूल्यमेतावदेव।"

आशास्यते यदनया कथया राष्ट्रनिर्मातॄणामध्यापकानां दयनीयां दशामपाकर्तुं प्रयतिष्यते।

## (११) द्वौ शास्त्रिणौ

डॉ० मनोहरशर्मणा लिखितायामस्यां कथायां द्वयो सहपाठिनो' दीर्घकालान्तर पारस्परिक सम्मिलन चित्रीकृतम्। तयोरेकस्तु ज्ञानशास्त्री, द्वितीयश्च पाकशास्त्रीति नाम्नाऽऽकार्यते स्म समतोनेऽध्ययनकाले। साम्प्रतमपि भानु पाकक्रियानिरत' सन् स्वनाम सार्थकं चकार। ज्ञानचन्द्रस्त्वर्जनाभावे ज्ञानशास्त्र्येवातिष्ठत्। ततस्तु भानुना स्वमित्राय ज्ञानशास्त्रिणे कस्यापि श्रेष्ठिनो गृहे पूजकपदमुपकल्पितम् एवं स मित्रधर्मं निर्वहन् ज्ञानशास्त्रिणः कष्टान् झटिति दूरीचकार।

अत्र खलु ज्ञानस्य तुलनायां कर्मणो महत्त्वं प्रतिपादितम्। शास्त्रिणा स्वयमपि स्वीक्रियते यत्—

"भ्रात ! तव पाकशास्त्रैव मां पण्डितमकरोत्, अन्यथा मम विद्या व्यर्थैव स्यात्।"

नैराश्येनाभिभूतस्य पण्डितस्येयमात्मस्वीकृतिरद्यतनस्य कृत्तिराहित्यस्य दुष्प्रभावं व्यनक्ति। अधुना न जाने कतिसंख्यकाः उच्चशिक्षोपेताः युवकयुवतयो वृत्त्यभावे तादृशेनैव नैराश्यनाभिभूताः सन्ति।

सत्यमेवेयं रचना वृत्त्यभावस्य कटुतमं रूपमभिव्यनक्ति।

## (१२) मानत्रिकोण.

श्रीमेवाराम कटारा' पद्मस्येयं कृतिरेकं त्रिकोणं प्रस्तुतीकरोति। दीपकस्य प्रथमा पत्नी ज्योतीतिनाम्ना प्रथिताऽऽसीत्। सा रूपवती सुशिक्षिता चाऽऽसीत्, किन्तु विवाहस्य दशवर्षानन्तरमपि सा सन्तति न लेभे। अनेन हेतुना तदीया श्वश्रूरतिसन्तप्ताऽजायत। तया वारंवारं प्रेरितो दीपको ज्योतिसपत्नीरूपेणाऽमितानाम्नी द्वितीयां पत्नीमानिनाय स्वगृहम्। अमिताऽपि बहुकालं यावन्न कामपि सन्ततिमाप। अत्रान्तरे ज्योतिं प्रति दीपकस्य स्नेहो न्यूनत्वं न जगाम। एतदालक्ष्य पितृसम्पन्नतया गर्विता साऽमिता दीपकं परितत्याज। दीपकेनापि तत्पितुः कार्यालयात् त्यागपत्रं प्रदत्तम्। परं यदा स गृहं प्रत्यावर्तत, तदैव तेन ज्ञातं यज्ज्योतिस्तु गृहे शान्तिमानेतुं तत्रतो गतासीत्। परं तया स्वपत्रे एतदपि संकेतितं यत् सा गर्भवती आसीत्। एवं खलु दीपकः उभाभ्यामपि पत्नीभ्यां विरहितः सन् बालकान् पाठयितुमारेभे। ज्योतेः स्मृतिस्तु तं नैवात्यजत्।

एकदा स कस्मिंश्चिन्निर्जने स्थले अमितां ददर्श, प्रत्यभिज्ञातवान् च ताम्।

परमभितया तु स नाऽभिज्ञात । तया निवेदित यत्तस्तितुरयोगालयस्य भग्नतया काऽपि श्रमिको मृत । ततस्तु अमितया सह तज्जनको तत्र पलायित । तदनतर दीपकस्त्वमिता स्वमित्रगृहमानिनाय । मित्र स्वा रक्षाधीशक आसीत् । स च ज्योतेरेव भ्राता । ज्योतिरपि सपुत्रा तत्रैवाऽस्थित । एतद् दृष्ट्वा अमिता भृषमतपत । स्वमपराधमाचिन्त्य सा रोदितुमारभत । ततस्तु त्रिकोणस्य तिस्र रेखा पुनर्मिलन गता । व लक्ष्य तस्मिंस्त्रिकोणसगमे प्रयाग इवासीत् ।

इत्यमेषा कथानिका सन्तत्यभावेन जनित त्रिकोण प्रस्तुतीकरोति । न केवल भारतेऽपि तु सर्वस्मिन्नेव जगति स्त्रिया वन्ध्यात्व विवाहोच्छेदाय कल्पते । द्वितीयोऽपि विवाहो यदा कदा सन्ततिप्रदानसामर्थ्यं भजते । एतदेव कथायामस्या मुपकल्पितम् । प्रथमा भार्या प्रति दीपकस्य दृढ स्नेहोऽपि भूरिश आख्यात । अमिताया मात्सर्यमपि प्राचुर्येण निरूपितम् । तदीय पत्र तु दर्पोक्तेर्निदर्शनमेवास्ति ।

नास्ति बहु कथनीयमस्या शैलीमधिकृत्य । स्पष्टमेवेय वैनाप्यार्जवेन सयुक्तेवाभाति ।

(१३) सत्यस्यान्वेषणम्

कुमारी प्रभा खत्री अस्या कथाया लेखिकाऽस्ति । अस्या कथानिकाया सत्यस्याऽन्वेषणाय कृता प्रयोगा विशदतया प्रस्तुतीकृता ।

विज्ञानस्याध्येता विशाल' सत्यमन्वेष्टु प्रायतत, पर तस्य सुहृत् प्रकाश-स्तमेव निरर्थकमिव मार्ग त्यक्तु मर्दैवोपदिशति स्म । विशालस्य तद्विषयाग्रहविशेष च दृष्ट्वा प्रकाशेनैक प्रयोगाश्चिकीर्षित । तस्मिश्च विशालस्य सहयोगोऽप्यपे-क्षितस्तेन ।

ततस्तु मित्रे ते डाक्टर-वैद्य ज्योतिषाचार्य-पीरादीन् समुपगत । उदर-पीडाया शमन च सर्वत्र प्रार्थित विशालेन । डाक्टरादिभिश्च पीडाया चिकित्सा भिन्नतया प्रतिपादिता । तैराख्यात निदानमपि बहु रोचकमासीत् ।

सर्वमेतत् प्रकाशयित्वा प्रकाशेन निष्कर्ष एष प्रस्तुनीकृतो यत् सत्य त्वनु-भूतरेव विषयोऽस्ति । तदन्वेषण च स्वसमत्याश्रय विनैव स्वाभ्यन्तरे एव करणीयम् । एतत् सश्रुत्य विशालोऽपि प्रत्ययमाप । प्रसन्नमुद्रया स निजगाद यत् साऽपि निशैव प्रयासेन सत्यमन्विष्यति ।

इत्थ गवेषा कथानिका सत्यान्वेषणसदृश कथानकमाश्रयते । स्वय

लेखिकाऽपि स्वीकरोत्येतत् तथ्य यत् सृष्टे सर्वे प्राणिनोऽनन्तकालत सत्यस्यान्वेषणाय प्रयतन्ते, पर न केनाप्यस्या दिशि साफल्यमवाप्तम् ।

पर प्रकाशितोद्घोषितो निष्कर्ष सशक्तता धत्ते। निश्चयेन स्वय स्वनुभूतेरेव विषयोऽस्ति। न तत् खल्विन्द्रियगम्यम्। तस्य स्वरूपमपि न खलु निश्चितम्। एतत्त्वस्तित्वस्य पर्याय एव। वैज्ञानिकै प्रयोगै सत्यमन्वेष्टु नैव शक्यते। एतदन्वेषण तु स्वान्त करण एव विधेयम्। एतद्दृष्ट्या कथालेखिकाया निष्कर्ष सर्वथैव प्रशस्य ।

कथाशैली सर्वथैवाधुनिका। भाषाया सारल्य गतिमयत्व चोल्लेखमर्हति।

समाहृति —

एतस्मिन् कथासकलने त्रयोदश कथानिका सकलिता। आसा लेखक लेखिका शैल्यादिदृष्ट्या किमपि वैलक्षण्यमिव निदर्शयन्ति। तत् खलु न केवल व्यक्तिभिन्नताऽऽधारितमपि तु युगवैभिन्न्याधारितम्। अत एव शब्दचयने पदविन्यासे च कोऽपि विशेषो दृष्टिपथमायाति। एतत् सर्व कथारसस्य चर्वणाया न खलु बाधकम्। सर्वा एवैता कथानिका विमर्शमितत्व प्रत्ययत्व च पुरस्कुर्वन्ति, सहृदयमनासि चाकष्टुं सर्वथैव क्षमन्ते, इत्याशास्यते सम्पादकेनाऽनेन। आशास्यते यदिद सकलने राजस्थानीयलेखकाना कथासु पाठकाना विशेषामभिरुचिमाधास्यते।

डॉ० पुष्कर शर्मा

# भ्रातृ स्नेहः

नवलकिशोर काङ्कर

वय चत्वारो भ्रातर तिस्रो भगिन्य पितरौ च। पञ्चवर्षेभ्य पूर्वमस्मासु ज्येष्ठौ भ्रातरौ तथाऽह पाणिगृहीतीभ्याऽपि संयोजितौ। मम पत्न्या अङ्क तु पुत्ररत्न मद्यैवमदेवयत्। एतावानेवास्माक परिवार आसीत्। पितृचरणा परम प्रख्यातिजुषो विदितवैदुष्या विद्वास समवर्तिषत। ज्ञातौ, समाज, विद्वत्क्षेत्रे चामीषा महान् सम्मान प्राप्तोऽभवत्

मम ज्येष्ठभ्रातुर्जन्मकाल एव प्रसवपीडया सतीलोक प्रस्थितवत्या प्रस-वित्र्या यथासमय पितृपादा पुनरागतदारा सञ्जाता। वय त्रयो भ्रातरो भगिन्यश्चास्या एव गृहीतजन्मान स्म। अस्मन्माता नातिशिक्षिता भूत्वाऽपि गेहव्यवस्थासञ्चालने विचित्र वैदुष्य वहति स्म। परमसौ प्रकृत्या परमकोपनाऽ-प्यवर्तत। मदीय पूर्ण नाम पूर्णचन्द्र आसीत् किन्तु स्नेहातिरेकेण सर्वे मा "पूर्ण पूर्ण" इत्येव कीर्तयन्ति स्म।

विद्या-वैभवमेव सर्व-श्रेयस्कर मन्वाना श्रीपितृचरणा अविगणय्यात्मन आर्थिकी परिस्थिति दूरे चापास्य निखिल लौकिक सौख्य रात्रिन्दिव परिश्रम्य तनयांस्तनयाश्च सममपीपठन्। ज्यायान् भ्राता मे सुरभारत्या नदीष्णतामवाप्य प्रथम श्रेण्यामाचार्योपाधिञ्च गृहीत्वा पाश्चात्त्याना वाच्यपि एम ए परीक्षा-मुत्तीर्यैकस्मिन् महाविद्यालये प्राध्यापकपद प्राप्तवान्। भगिनीषु प्रथमा बी ए-प्रथमवर्षे, द्वितीया दशमवर्गे तृतीया चाष्टमश्रेण्यामपठन्ती समवर्तिष्ट। अनुजौ साम्प्रत शैशवमध्यजन्मावेवास्ताम्। अह तु विज्ञानविषये विशेषमतिमादधानो द्वितीयश्रेण्याम् 'एम एस सी' इत्युपाधिनाऽऽत्मानमलङ्कृत्यापि सेवावृत्तिमलभमान सवयोभि सहैतस्ततो भ्रमणे प्रवृत्त।

मम ज्यायान् भ्राता यावान् शान्त, सरल, मधुर, सुशील विनम्र सदाचरणपरायणश्चासीत् अह तावानेवोग्र, प्रतीपप्रकृतिक, दुःशीलोऽनुशासनशून्यश्चा-

गताऽवर्तन। भाग्यादहमपि निखिल दिन परिभ्रम्य दिवसावसानेऽङ्गाकुलाये शकुन्तवत् तत्र गृहं समागच्छम्। मां वीक्ष्य किमपि वक्तुकामा पितृपादा सर्वथाऽसमर्था अपि पूर्वार्धेन शयनादुत्तिष्ठन्तो यद्य एवाधोमुखीभूय निपतिता। पतनेन महेश च नेत्र का रक्तमश्रुणो मस्तु वेगेनावधिरं। रोगवेगातिशायितामसहमाना प्रमी पुनरपादाश्वर्वैतन्य परित्यजन्त इव लोचने मनाङ् निमील्य मूर्च्छाभिभूता भूता। एतेषामनया दशयाऽनवशनमाशय धमद्धमद्धमनी-धावमान-शोणितस्य ममापि तदानीमपच्यन्त इवाङ्गानि अनश्यत इव सर्वेन्द्रियाणि अच्छिद्यन्त इव च निखिलानि देहबन्धनानि। स्थितिमेतामालोक्य शिशवोऽपि च रोदसी रोदयन्त श्वोच्चैः प्रलपितुमारभन्त। एवंविधे प्रतिकूले मातरमहमुच्चैराह्वय यत मा रश्मिवद्धेव वायुना समानीतव च तत्र भटिति समुपस्थित तदीया दशा दृष्ट्वा च किमप्यनर्थजात चिन्तयन्ती सोन्माण्यश्रूणि विमुञ्चन्ती सुभृशं त्रस्यन्ती च सा माध्वम परवशाऽभूत्। अहं तु तेषां मनोभावमवगम्य तत्पार्श्वे कृतापराध इवाधोमुख उपाविशम। तदानीं तेषां नयनयोश्रुविप्रुष आसन। वक्तुकामा अपि कण्ठावरोधेन स्पष्ट कथयितुमसमर्था शनैः शनैरव्यक्तया गिरा मामवमबोधिषत—

"वत्स पूर्ण! साम्प्रत मे नदिष्ठ एवास्म्यन्तसमय। सर्वैर्भ्रातृभिरच्छेद्येन स्नेहेन वर्तितव्यम्, न स्वल्पोऽपि विवादो विधेय। मा कार्षी कदापि मातुर्भ्रातुर्वाऽवहेलनम्। ज्येष्ठभ्रातरमेवेदानी सर्वं मत्स्थानेऽवगच्छतु। अय साधुस्वभाव सर्वेषामेव न हितैषी वर्तते। अतो नायमुपेक्षणीय कदापि। सम्प्रति भगिनीना विवाहभारोऽपि युष्माकं शिरस्येव समापतित। नेमा पितृविहीना भूत्वा शोचनीया स्युरित्यवधेयम। युष्मन्माता सर्वशास्वभावाऽपि न कदाचन केनचन तिरस्करणीया। नेय वराकी वार्धक्ये प्रतिपन्नमनस्यमानसा मा मस्मरन्ती रोद रोद जीवन यापयेद' इति। वक्तुकामानामपि तेषां नानोऽधिक वच प्रासरत। श्रुत्वेद स्नेहसिक्त पितृचरणानामन्तिममुपदेश दुःखावेगमवरुन्धतोऽपि ज्येष्ठ भ्रातुर्नयनयो सहसा श्रावण एव समायात, अहमपि पितृपादाना पुत्रवात्सल्येन द्रवीभूता जात। अविरलमश्रूणि पातयन्ती नातिदविष्ठ पतिवियोगजन्य विलोकयन्ती माताऽपि मे सत्वोद्रेकादात्मस्वभाव धिक्कुर्वती, सखेद नि श्वसन्ती नितान्तमनुतपन्ती मास्रेड भर्त्तुश्चरणौ मस्पृशन्ती, स्वकीयेनोत्तरीयाञ्चलेन च तान् वीजयन्ती परिव्यथितहृदया तेषां पादाब्जयोर्न्यपतत। हन्त हन्त!! अस्मिन्नेव क्षणे पूज्या पितृपादा एकवार करुणापूर्णदृष्ट्याऽस्मानवलोक्य चिरनिद्राय दीर्घनिद्रायामस्वपन् हाहाकारश्च सर्वत प्रावर्तत।

पितृचरणाना द्वादशाहक्रिया पि तावन्न सञ्जाताऽऽसीद गृहे कलहारोपण

प्रारभन। सत्य सत्यमहमेवास्य हेतुरासम्। गृह पैतृकी सम्पत्ति लक्ष्यीकृत्य मयैवैष कलहवाया समुत्थापिता। यतो मह्य ज्येष्ठभ्रातु शासन नारोचत, सहैव तत्सुखमवासमपि नाहमभ्यनन्दम्। जीवत्सु तातपादेषु तु मया भ्रातु सर्वमनुशासनमसह्यत, न कदापि स्पष्टरूपेण तद्विरोधाऽक्रियत। परमधुना विज्ञानविषये द्वितीयश्रेण्यामाचार्यतामुपगतस्य स्वतन्त्रप्रकृतिकस्य मे भ्रातृशासनवस्थान क्व सम्भवमासीत्? अतो ह पितुरातिममप्युपदेश कूपे निक्षिप्य स्वा प्रकृतिमवान्वसरम्।

मया निरचीयत, मम वयस्यैरपि तथैवाकथ्यत यत् पितुरनन्तरमपि यद्यह भ्राता सह निवत्स्यामि तर्हि स मरणपर्यन्त मम स्वातन्त्र्यावरण रोत्स्यति। अतो न मया कदापि साम्प्रत भ्रात्रा सह वासो विधेय – इति। अत एव मया दृढनिश्चयपूर्वकमपरस्मिन्नेव दिन ज्येष्ठभ्राता सूचितो यद्दिनत्रयावधानन भवान् आनन्दपूर्वक मया सह मन्त्रणा विधाय यथाभाग पैतृकसम्पत्तेर्विभाजन विदधातु, अन्यथा विवशेन मया न्यायालयस्याश्रयो ग्रहीष्यते। एतच्छ्रवणसमकालमेव भ्रातृवर्यश्चकितातिचकित इवाभोभूत्। तत्पादतलात् भूमि स्खलितेव प्रतीयत, न च तन्मुखात् किमपि वचो न्यसरत। तन्मौनभावमन्यथा सम्भाव्य मया पुन स्पष्ट कथितम्—'कथ भवता मौनमवलम्ब्यते? न मह्य भवादृशै सह साम्प्रत मेकस्मिन्नपि दिने स्थान रोचते, अतो गृह एव यथाभाग सम्पद्विभाजने भवता श्रय, अन्यथा न्यायालयस्तु वर्तत एवेति' सात्म सञ्चिन्त्य भ्रातोदितम्—'पूर्ण! पूज्यपादाना द्वादशाह-श्राद्धसमाप्तौ त्वत्कथनानुसार कस्मिंश्चिदपि दिवसे सर्वमिद त्वदनुकूलमेव वय सर्वे सम्पादयिष्याम। किञ्चिद् विचारय लोका कि कथयिष्यन्ति साम्प्रतम्?

मयोक्तम् नाह लोकेभ्यो बिभेमि न च मम पार्श्वे तथा वार्त्ता श्रोतु समय यन्मया निगदित तदशरश सत्यमवगच्छतु भवान नाह, द्विवार कथन जानामि" इति। नास्य भ्राता किमप्युत्तरितम्। अधोमुख सहसा स बहि प्रकोष्ठेऽगच्छत न च पुनर्विषयस्यास्य कापि चर्चा गृहे तेन प्रचारिता।

दिनत्रय प्रतीक्ष्य मयाऽऽत्मनिश्चयानुसार न्यायालय विभाजनाभियोग प्रास्तूयत, सूचितश्च गृहजन। इदमवगत्य तु विस्फारिताभिमुखो मे सहाध्येन तनया मामवेक्षमाण एतदेवशोचत्—"पूर्ण! नैतत्तव युक्तोचित कर्म। कि पितृचरणानामन्तिममप्युपदेश सम्प्रत्येव व्यस्मर? का शीघ्रताऽऽसीदिदानीमेव? अस्तु यादृशी तवेच्छा।"

अस्मत्तातपादाना प्राणैः सह मातु प्रकृते. धैर्यमपि न जाने सहसैव कुत्र विलीनम्। मर्तृ कामा सा मद्वैकस्मिन् गृहकोणे दु मह पतिशोक-ज्वालाभिर्ज्वलन्ती, अविरतमश्रूणि पातयन्ती चावतिष्टत। न खादन, न वा पान तस्यै किमप्यरोचत। अभूतपूर्वेव तस्या स्थितिरदृश्यत। का कथा पुनरस्या गृहस्थितिनिरीक्षणस्य तु। किन्तु ज्येष्ठभ्रातुग्नुरोधेनाग्रामावपि ग्रामवाबोचत परमह तामपि स्पष्टमवादिप "यज्ज्येष्ठभ्रातृमहोदया दिनत्रयपूर्वमेव मया सूचिता परन्तु ते तु मा बालिशमेवावगच्छन्ति, न किमपि मम कथने ध्यान ददति। विवशेनैव मया न्यायालय प्रार्थित"— इति। तु वैतद् भृश दूयमाना मातामन्मुखदर्शनेऽपि पापमाकलयन्तीव चेलाञ्चलेन स्वमुखमाच्छाद्यास्थित। भ्रातृवर्योऽपि ततो न किमप्यचकथत्।

द्वितीयस्मिन् दिने मदीयो मातुः समागत्य मामवादीत्— "अपि त्व गृहविभाजन वाञ्छसि? मत्ताऽऽकर्णित यत्त्व न्यायालयेऽभियोग कृतवानसि" इति। यथाऽह पूर्व भ्रातर मातरञ्चोदतरस्तथैव मातुलमपि स्पष्टमवोच यन्न मया साम्प्रत भ्रात्रा सह स्थातु शक्यते।

*मातुलो भूयोऽपि प्रेम्णा मा पर्यपृच्छत— पूर्ण! तव ज्येष्ठो भ्राता तु* देवतुल्यो विद्यते, सुशील शान्तिप्रकृतिश्च दृश्यते। कथ पुनस्त्व त परित्यक्षसि?

मयोक्तम्, इयमस्ति मे मानसी वाञ्छा, मदीयमनोवाञ्छायाञ्चापरेषा हस्तक्षेपस्य कोऽस्त्यधिकार?

आत्मीयत्व प्रदर्शयता विपश्चिता मातुलेन पुन कथितम्— "वत्स पूर्ण! अवधेहि, अवधेहि। त्वदीया पितृपादा अस्मदावृत्ता समाजे कियन्तो लब्धसम्माना अवर्तन्त। किं तवानेन कृत्येन तेषा कीर्तिचन्द्रिका मलिना न भविष्यति? किं सुमनसा पुराजुषा तेषामात्मा ग्लानि नोपैष्यति? सर्वत्र तव महती निन्दा भविष्यति, सर्वे च त्वामवदिष्यन्ते। अत साम्प्रतममाम्प्रत तवेद कर्म।"

"नास्ति ममास्य चिन्ता" इति कथयन्नह ततश्चलित। मातुलोऽपि पराजित इव निःश्वसन् स्वगृहानगच्छत।

एव न जाने मम पार्श्वे कियन्त सम्बन्धिन समायाता प्रतिगताश्च, परमह न स्वपथो विचलितोऽभव पदमपि। अह तु तस्मिन्नेव दिने माय पत्नीमुपरि प्रासादपृष्ठे भिन्नप्रकोष्ठे स्वनन्त्रमेव भोजन सम्पादयितुमादिशम्। सा तु वहो

कालादेतदेव प्रतीक्षमाणाऽऽसीत्। मया तत्कालमेव तत्सर्वमभिज्ञयत। रात्रौ यदा भ्रात्रेद सर्वमाकर्णित तदा स तत्क्षणमवोपरि समागत्य तामेव पुराणीमात्मन उपदेश साहस्री श्रावयितुमुपाविशत्।

न तत्र मह्य भ्रातुरागमनमरोचत। क्रुध्यन्नहं तमवोचम्—"नाहमिदानीं भवता सह कस्याञ्चिदप्यवस्थायां स्थातुं शक्नोमि। यदा च सहावस्थानमेव न तदा सहभोजनं तु बहुदूरम्। अतो न भवता कदापि पुनर्मदुपदेशदानाय वतव्यम्।"

अपमानभारमिम शिरसि वहन् भ्राता येन पथाऽऽगतस्तेनैव प्रतियात। द्वादशाहनिवास्त न काचन विशेषघटना घटिता। यद्यपि कश्चिच्छ्लोक प्रवर्दयितु समवेता लोका अवश्यमेतस्य विषयस्यापि चर्चां वितन्वन्ति स्म। पर मम विचारेष्वोपदपि परिवर्तन नायातम्। पश्चात् अनुरोधेन नाह पुन कदापि किमपि प्रावोचम्। भ्रातृवर्योऽपि भूयो न मा किमप्यवादीत्।

पितृपादाना द्वादशाहश्राद्ध भोजनादि-क्रियाकर्माणि सर्वाणि समाप्तानि। सान्त्वयितुमागन्तुकाना तादृश समवायोऽपि नावर्तत। वराकी जननी जरातुरा प्रतिपलम श्रुविप्रुष पातयन्ती सर्वेषाममङ्गत्रहतेनानुरोधेनैकमर्धमोदनकवल भुञ्जाना स्वजीवनञ्च धिक्कुर्वती कथमपि कालयापन विदधत्यत्रानिष्ठत। पितृहीना शिशवोऽपि मातुर्दशा लोक लोक रुदन्त इवादृश्यन्त। एव सर्व एव गृहप्राणिन उपरत पितरि महता कष्टेनैव जीवन्ति स्म।

अस्तु। न मया न्यायालयादभियोगपत्राणि प्रत्यानीतानि। शीघ्रमेव च विभाजन मदनुकूल जातमेव। न तत्र ज्येष्ठभ्रात्रा स्वल्पोऽपि मद्विरोधोऽक्रियत। यदा वय न्यायालयाद् बहिरागतास्तदा भ्रातृवर्यो मे समीप समागत्य मत्स्कन्धे च स्वहस्त निधाय स्निग्धया गिरा मामवोचत् 'पूर्ण। त्वदिच्छानुसार विभाजन तु जातमेव परमद्य सम्प्रत्यावयो हृदि न कश्चन विच्छेद समागच्छेदिति सर्वदा सर्वथा चावधेयम्' इति नाह भ्रातर किमप्युक्त्वा गेहमेव समागमम्।

विभाजनानुसार नीचैस्तनो विशालो भवनभागो ममाधीनतायाम्, उपरितनश्च ज्येष्ठभ्रातु पार्श्वे समायात, मध्यवर्तिनि गृहभागे च माता एवं पुत्रतुल्या दिविभिः सह निवास म्यकरोत्। न्यायालयात् प्रत्यावर्त्य मध्यमेऽह्नि भ्रातृदेवेन भोजन न गृहीत, न वा केनचन गृहजनेन वार्तैव विहिता। प्रजावत्या भृशं प्रार्थ्यमान स केवल स्वल्प जल निपीयास्वपीत्।

सायं यदाऽसौ स्वरमवदया भोजनं कर्तुमुपाविशत्तदा स एकाकी भोक्तुमशक्नुवन् पत्नीमवोचत्— "नीचैर्गच्छ, शिशून् पुत्रांश्च समानय, तेऽत्रैव मया सह भोक्ष्यन्ति, तदनन्तरं जननी त्वया सह खादिष्यति । एतान् विना मम गलप्रदेशादेकोऽपि कवलो नीचैर्नावतरति ।" तयोक्तम्, अद्यैव तु तेन न्यायालये स्वेच्छानुसारं गृहादिविभागेन कारितम्, अद्यैव च भवांस्तस्मिन्नीदृशं स्नेहं प्रकटयति । अस्मभ्यं खलु द्वयोरेव स्नेहः समः । भ्रात्रोक्तं भद्रे ! इयन्तमनेहसं मया सहोषितयाऽपि त्वं मत्प्रकृतिं नाज्ञासीः । मात्राऽज्ञानतो वा यत्नेन विहितं न तस्यायमर्थो यत् सोऽस्मत्स्नेहभावादपि वञ्चितो भवेत् । तद् गच्छ गच्छ उच्चैः शब्दापय, कथय च तौ त्वदग्रजाता समाह्वयति भोजनाय । भूयस्तया निवेदितं नाहं तु तदाह्वाने स्वल्पमपि लाभं सम्भावयामि वदामि च न स मम वचनैति । भ्रात्रा मानोऽपि पुनराज्ञापिता सा मामुच्चैराह्वयत् ।

तस्मिन् दिनेऽस्माकं पाकशालायां ज्येष्ठं भ्रातरं लज्जयितुमस्थ्यर्थयितुञ्च मिष्टान्नव्यञ्जनानि सम्पादितान्यासन्, वाढमाहता माताऽपि तत्रैव स्थिता विद्यते । अहञ्च भ्रातृपत्न्या आह्वानरवं श्रुत्वा झटिति स्थाल्यां नमनानि गृहीत्वा भोक्तुं संलग्नो मम जननीञ्चोक्तवान्— कथय स इदानीं भोजनं कुर्वन्नस्तीति ।

मया विचारितं भ्राताऽसौ मां वञ्चयितुमाह्वयति अथवा विभाजनानन्तरमप्यये मां स्वाधिकार एव रक्षितुं चेष्टते । अन्यथा कोऽयमवसरो मम कारणस्य ? न यास्यामि न यास्यामि कदापि अहमधुना तेन सार्धं नैव स्थास्यामि ।

भ्राता यदा जननीवचनं कर्णे कृतवांस्तदा तत्क्षणमेव स भोजनासनादुत्थाय प्रजावतीमब्रवीत्— नाहमिदानीमिह भोजनं करिष्ये । त्वमत्र तिष्ठ, अयमहमागच्छाम्येव झटिति । श्रुत्वेदं सा विस्मयमादधाना किमपि नोक्तवती, भ्राता च सत्वरमस्माकं सदनं समुपेत्य मत्पत्नीं सम्बोध्य सस्नेहं प्रोक्तवान्— "स्नुषे ! अहमधुनाऽत्रैव भोक्ष्यामि ।'

अहं तु ज्येष्ठभ्रातुः सहजस्नेहपूर्णं पीयूषाञ्चितं वात्सल्यसवलितञ्चेदं वचो निशम्य भूमिमवेक्षमाणो वाचंयमो मिष्टान्न-भक्षणे दत्तचित्तमिवात्मानं प्रदर्शयन्नतिष्ठम् । शरीरिणी मनोव्यथेव जनन्यपि विस्मयमावहन्ती न किमप्युक्तवती ।

मदीया जाया यदैकस्यामन्यस्यां स्थाल्यां मिष्टान्न-व्यञ्जनानि सज्जयितुं समारब्धा तदा भ्रात्रोक्तम्— "तिष्ठ तिष्ठ, पूर्वं पूर्णं एव भोजनं करोतु, एतदनन्तरमहं भोक्ष्ये ।'

अहं मुनिरिव मौनमवलम्बमाना भोजनं कर्तुं नाशकम्।

यदा च भुक्त्वोदतिष्ठस्तदा भ्राता मदुच्छिष्टां स्थालीं गृहीत्वा पत्नीमादिशत्— 'वत्से मनुष ! एतस्यामेव स्थाल्यां मह्यमपि भोजनं देहि। बाल्ये नित्यमावाभ्यामेव भुक्तमासीत्। आशैशवात् मद्भगिनीमावाभ्यामीश्वरोऽपि दूरं कर्तुं न शक्तः का कथा पुनर्विभाजनस्य'?

शब्दानेतान्निशम्य तु मां शतशो वृश्चिका इव युगपददशन्नूनम्। अनुताप-तपनेन दह्यमानेऽस्मिन्नहं लज्जया नतानना मूकाऽभवम्। अचिन्तयमहं "हन्त हन्त !! कथमहं केन दुर्विपाकेन कस्य वा दुरदृष्टस्य वशात् देवनिर्विशेषस्य ममनमनीयस्य ज्यायसो भ्रातुर्हैयङ्गवीनमृदुलं हृदयं व्यर्थमातोतुदम्। अहं दुष्टोऽस्मि महान् नीचोऽस्मि, परमं पापीयसी चास्मि। ममेदृशं दुर्व्यवहारं दर्शं दर्शं मन्ये सुरलोके विराजमानाः पितृचरणा अपि हन्त तप्यन्त एव।

तदानीं मम नेत्राभ्यामश्रुधाराः प्रावहन्। अहं हि कर्तव्यमूढाऽभवम्। किमपि तु कथयितुं मे वाक् न प्रासरत्। मन्दं मन्दं 'आं भ्रातः ! अहो मे भ्रातः !!' इत्यस्फुटस्वरेण तच्चरणयोरपतम्। अन्तर्निगूढव्यथया मातापि च सर्वमिदं दृश्यं दृष्ट्वा सन्तोषमन्वभूत।

तत्क्षणमेव प्रीतिमयोऽस्य शान्तिसदनस्य भ्रातृचरणाः पादयोर्निपतन्तीं मां प्रसारितबाहुभ्यां स्ववक्षसा धारयन्। तयोरपि नयनयोः नेत्रधारा नवाश्रूणि विलसन्ति स्म। अपूर्वं आसीत् स कोऽपि स्वर्गीयः समयो द्वयोर्भ्रातृस्नेहबन्धनस्य।

तदाप्रभृति निश्चप्रचमावयोः स्नेहनिबन्धनं पूर्वापेक्षयापि सुदृढमभूत् यद्धि न कदापि शैथिल्यमवाप्नोत्।



१/राजस्थानस्याधुनिका संस्कृतकथालेखिका।

# सापराधः

गणेशराम शर्मा

## ( १ )

अस्ति विपिनविहारी नाम वणिग्वैद्यसंस्थानस्य कोशव्यवस्थापकः । महाधनवान्महाजनत्वाच्च तन्नामैव सुप्रतिष्ठितं गण्यते । तस्य परिवारो विस्तृतो महान् वटवृक्ष इव शाखाप्रशाखासमन्वितो वर्तते । नष्टपितामहः पितामही, मातामहो, मातामही, मातापितरौ, मातुलो, मातुलानी मातुल्या पितृव्यौ भ्रातरौ, भगिन्यः सर्वेऽपि च सुशिक्षिता दीक्षिता विद्वांसः । प्रायस्सर्वेऽपि चास्य कुटुम्बस्य सदस्याः पुमांसो ललनाजनाश्च राजकीयसेवासु नियुक्ताः सन्ति । अधिकांशास्तु महापदान्यधितिष्ठन्तः प्रोच्चैः स्तरीया वरिष्ठाश्चाधिकारिणो वर्तन्ते । परिवारस्यास्य वधूः कन्यकाद्वयस्यापि सर्वा गृहीतशिक्षा व्यवहारकुशला गम्भीरस्वभावा स्मितपूर्वं मधुरकोमलभाषणाश्च विद्यन्ते । संयुक्तोऽसौ परिवारो जनप्रियोऽस्ति । राज्यकार्येषु सामाजिकेषु प्रसङ्गेषु धार्मिकोत्सवेषु, सभा समितिसम्मेलनेषु, दिनचर्यासु च तासु तासु सदा सर्वदा तथामेतेषां सर्वानुकूल व्यवहरणात् सदाचारादि गुणैः सर्वजनसहायकत्वाच्च सर्वेऽपि नागरिका जनाः, सामाजिकाः सभ्याः शासनाधिकारिणश्चैते सन्तुष्टाः सुप्रसन्नाः हितैषिणश्च विद्यन्ते । अभिजनवता महति कुले समुत्पन्नास्त एते हिन्दुत्वाभिमानिनो वणिजः स्वश्रेष्ठतान्विताः. सद्योगगुण विशिष्टा लौकिकेषु धर्मकलापेषु परमचातुर्येण व्यवहरन्तो मोमुद्यमाना सन्ति । कुटुम्बेऽत्र विचारस्वातन्त्र्यं व्यवहारचलनस्वाधीनता, व्यक्तिगता सर्वतन्त्रस्वतन्त्रता च विलोक्य तेषां जीवनयात्राप्रणाली च विशिष्टगुणा वीक्ष्य लोकास्तमेतं कुटुम्बमेवादर्शरूपमिव मन्यन्ते, समाद्रियन्ते च । अत्र परिवारे कश्चनार्यसमाजस्य सदस्यतां परिपालयति, कश्चिदन्यः सनातनवर्णाश्रमधर्मानुयायी, परः शाक्तशैवादीशिष्योऽन्यतमो वैष्णवो भक्तिमर्यादामनुसरति, कश्चन योगिजनभक्तोऽन्यतरो विज्ञानवादी, कश्चिद् गोभक्तोऽन्यो व्यापारव्यवसायनिपुणः, परो नास्तिकशिरोमणिः सर्वथा भौतिकवादी, कश्चनामिषभोजी, कश्चिच्छाकाहारः, कश्चन क्रीडारसिकः शिक्षकश्च वर्तते । सर्वेऽपि चैत

वणिजरगिराग्मदन्या स्वाम्याश्रदाविश्वासानुगा जीवरक्षितमनुसर्तुं यथेच्छं व्यवहर्तुं च स्वतन्त्रा सन्ति। मन्यप्येव तदिमे सुसङ्गठिता ऐक्यगुणसम्बद्धा दुर्भेद्या शिष्टजुष्ट-मार्गेऽन्त्येव सर्वेन च व्यवहरन्ति, येन नेषाम् कदाचित् कस्मिन्नपि च विषये मतभेदो वा विप्रतिपत्तिर्वा भवति। तथामेवंविधं विचारस्वातन्त्र्यं प्रवहास्वाधीनतामेव, मतभेदराहित्यं, पारस्परिकं स्नेहसद्भावं च नागरिका सर्वे त्रिमायतनसमुद्भ पुण्यशतैरपि दुर्लभ्यं किमपि स्पृहणीयं सौभाग्यगुणमिव मन्यन्ते।

( २ )

अथात्र देशे भारते स्वराज्यप्राप्त्यनन्तरं विपिनविहारिणः पितामहो वैराग्यभावमापन्नो हरिद्वारं गत्वा तत्रैव गङ्गातीरे पर्णकुटीं निर्माय शेषं जीवनं भगवत्स्मरणे यापयितुं कृतनिश्चयस्तत्रैवाध्युवास। तस्य मातापितरौ तीर्थसेवनेच्छया काशीं जग्मतुः। परिवारत्यागात् पूर्वमेव हि तौ स्वोपार्जितं धनं भूमिगृहापणादि सम्पद् सर्वमपि भौतिकं परिग्रहं चलमचलं च न्यायतो यथायोग्यं समभागं विभज्य स्वपुत्रेभ्यः सर्वेभ्यः प्रापयताम्। स्वयोगक्षेमं द्रव्यं तौ स्वाभ्यां सार्धमग्राहताम्। तत प्रभृत्येव ते वंश्याः कुलबान्धवाः पृथग्भूता यथेच्छं स्वगृहाश्रमान् स्थिरीकृत्य निवसन्ति। प्राचीनं राज्यशासनं विलयं गतं, नवीनं प्रजातन्त्रात्मकं च प्रवर्तितं विपिनविहारि-णोऽपि राज्यसेवातो नियतवृत्तिरग्रणमस्यो दिने दिने निकटमुपगच्छन्नभूत्, नवे शासने दिनानुदिनं जायमानानि परिवर्तनानि स्वमन्तनीया वृद्धिमापन्नो जीवनस्योत्त-रार्द्धं वृद्धिं गच्छन्ती महार्घता गार्हस्थ्यं चापचीयमाने प्रभूते धनव्ययमवलोक्य विपिनविहारी स्वजीवनस्यान्तरकालविषये, सुस्थितोऽपि आजन्मसुखभावात् किञ्चि-च्चिन्ताकुल इव भवितुमारेभे। एकदा रात्रावन्ते शयाने स स्वमनस्येव चिन्तयामास—

दायभागे मया स्वभागतो न्यून धनमेवोपलब्धम्। तस्मादपि बहुभाग-धनमपि क्षयं जगाम। वर्षद्वितयं स जायमानोऽस्ति। ममैका दुहिता विश्वविद्यालय स्नातकोत्तरकक्ष्यामधीयानास्ते द्वितीया वर्षेऽस्मिन् स्नातकपरीक्षां दातुमिच्छति। अन्यास्तिस्रः कन्या पञ्चपुत्राश्रमे प्रारम्भिकं माध्यमिकपाठशालाश्चाधीयाना वर्तन्ते। मुद्रास्फीतिर्महार्घता पदार्थजातानामत्यावश्यकानामनिवार्याणां दुर्लभतापि दिन-दिनं विवर्द्धमाना विद्यते। शासनेऽस्थिरतानुतापश्च वरदाचारराजकता विजृम्भमाणेव दृश्यते। राजतन्त्रेऽस्मिन्नवीने शिक्षाभिक्षैव दुर्लभा सम्प्रति। न्यायो द्रव्येण पक्षाश्रयेण वा लभ्यते। निरिन्धौषधालयोऽपि धनैकशरणानि सन्ति। सुरक्षा नुनामस्थैव प्रजाजनानाम्। प्रतिदिनं शासननियमगर्हिता परिवर्तने विशिरिवनगे

च। राज्यसेवकाना स्थितिरपि क्षणस्थायिन्यनिश्चिताऽविश्वसनीयं चास्ति पुनर्ममैते द्वे पुत्र्यावपि सद्यो विवाहयोग्ये स्त । अत्र कर्मण्यपि च बहुधनमपेक्ष्यते नाम नूनम् । अनन्ये कुलीना सुशिक्षिता दीक्षिता सदाचारिणो वरा: प्रभूतयौतुकदानेन विना नोपलभ्यन्ते । अस्याहि विषमायां लोकस्थितौ मम गृहाश्रमस्थिति प्रभूतधन विना कथमिव कुशलिनी निरापत् स्यादार्त्तिकाले ? अहह ! महती हि विडम्बनयम् !! विशेषतो मादृशा मध्यमश्रेणिकाना स्वल्पवित्ताना राज्यसेवामात्राश्रयिणाम् !!! पत्नीवमम मृणालिनी माध्वी सुशिक्षिता सौम्यस्वभावापि च पूर्वोक्ता सवशात्रैस्तै संस्कारै पूर्वतनै प्रणोदिता मुक्तहस्त धनमव्येति । स्थानान्तरमपि चेतो मम सम्माध्नन् यथा सहकारिणो मेऽजिकारिणो मुखाच्छ्रवैव कर्णानपि क्वथयन्ति माम् । अथपुनर्गृहमधीयेषु नित्यमेव हि कर्मजालापु नत्ववश्यकर्त्तव्येषु व्ययाधिक्य महार्घ्यावनतादिगुण दशगुणादपि चाधिकमेधमानमास्ते । वस्तुतस्तदैतत् सर्वं पश्यतो मेगार्हस्थ्यपरिस्थितिस्तावदूबहिस्त शोभनेव परिदृश्यमाणापि चान्तत परिक्षीयमाणा दुर्बलैवमे प्रतिभाति । अहा ! कथमिवाह तमेत दुर्वह कर्तव्यभार-मनिवार्यमुपढौकयितु समर्थ स्याम् ? कुलप्रतिष्ठा कुटुम्बप्रतिपत्ति, सुविस्तृताञ्जागतिकान् व्यवहारान् वत कथमह परिसानयेयम् ? तन्मया किं कर्तव्यमिदानीम् ? केनोपायेन, कन विधिना, किं कृत्वा चाधुना जीवितव्य भो । हा, हन्त ! भविष्य ममान्धकाराच्छन्नमिवैव दृश्यते !!!'

एवमन्तर्व्यथादन्दह्यमानहृदयस्य विपिनविहारिणो जीवनसमयो व्यतीयमानाऽस्ति । अथैकदा रात्रौ मृणालिनी विपिनविहारिण सुखमुपविष्ट पप्रच्छ— कथमिव भवान् सचिन्त सशोक इवालक्ष्यते ? दिने दिने भवत्स्वास्थ्यमपहीयमानमिव परिपश्यामि, प्राणनाथ ! भवन्मुखेप्रागिव सा नैसर्गिकी सौम्यता, प्रसन्नता स्वभावमाधुरी, स उत्साह, सा शान्ति कान्ति श्रीश्चेदानी ननु क्वापजगाम ? विवर्ण, विच्छाय, निस्तेजो, म्लानमिव मुखमालोक्य भवतस्तदहतन्मया पृष्टम् । यदिनातिगूढ रहस्य भवेत्तदा निर्णयमुच्यताम् ।

सोऽब्रूत—'प्रिये ! मृणालिनि !! माध्वि !!! नास्त्येव किमप्यन्याहित नादृशम् । परन्तु'

मृणालिनी—'परन्तु किम् ? प्राणवल्लभ ! निर्विशङ्कमुच्यताम्, यद्भवन्मनसि विद्यत चिन्ताकारणम् ।'

यद्यपि गम्भीरहृदयो विपिनविहारी तद्दिने तु मृणालिन्या मुहुर्मुहु पृष्टोऽपि न स्वाशङ्का गार्हस्थ्य सम्बन्धिनी नोक्तवान, परमन्ततोगच्छद्भसु दिनेष्वेकदा रहसि

धिग् धिग् माम् !! वज्रनिष्ठुरं विधेहि स्वहृदयम् ! कार्ष्णायसनिर्मितमिव स्वकीयं भौतिकविग्रहं परिभावयस्व ! अये ! देवि !! मृणालिके !!! त्वं तु पुनरधुनातन्या दुःसाहसवत्याः दस्युदलशिरोमणेः पुत्तलिकायाश्चेष्टितमपि सुदृढं रहस्यरोमाञ्चसंवलितम् साहसपूर्णं चरितं सम्वादपत्रेषु पठित्वा सर्वमाद्यन्तपर्यन्तम् जानासि ! तदिदानीमात्मनीऽविश्वासभावं सर्वथापहाय त्वया चण्डीरूपमाचरणीयम् ! आसन्ना हि ते योग्यतायाः, परिपक्वानुभवप्रौढेः, सर्वशिक्षायाः, विवेकस्य, चातुर्यस्य, कर्मकौशलस्य धैर्यगुणस्य च परीक्षासमयोऽवितर्कितसम्भवोऽभ्यापतितः ! सुदृढीयानस्ति मेऽविचलो हि विश्वासो यत्त्वमत्र परीक्षायामवश्यमेव प्रथमश्रेण्यामसर्वश्रेष्ठत्वेनोत्तीर्णा भविष्यसीति। सावधाना भव ! त्वमस्वात्मचेतनाम् ! किमिव हि दुष्करमत्र संसारे मानवानाम् सुदृढसङ्कल्पानामद्यतनयुगीनानामिदानीन्तनेऽस्मिन् तुष्णामनैः यन्त्रिज्ञानवादिन्यराजके सर्वथा स्वतन्त्रे युगे ? विशेषतस्तु त्वादृशीनां सचेतसां नारीणाम् ! अवधत्स्व ! सत्यं मे विश्वासं सर्वात्मना कुरुष्व !'

एवं वचनशतैर्हितोपदेशैस्तैस्तैश्च प्रभावोत्पादकैः सुचिरं प्रबोध्य स्वपत्नीं विपिनविहारी निशीथोत्तरं स्वकक्षं गत्वा सुष्वाप, परन्तु रात्रिभरं निद्रां नो लेभे।

( ४ )

अथ सप्ताहाभ्यन्तरे नगरेऽस्मिन् प्रवादोऽसौ प्रससार यद्धि राजकीये बैङ्कसंस्थाने केनचिल्लक्षरूप्यकमुद्राप्रायं धनं चौर्येणापहृतमिति। 'मुण्डे मुण्डे मतिर्भिन्ना तुण्डे तुण्डे सरस्वतीति' नगरे नवा वाणी श्रूयमाणास्ते यद्यपि दुर्घटनाया अस्या विषये प्रत्यक्षं न कोऽपि किमपि ब्रूते, तथापि गृहकुड्यान्तर्यत्र तत्र सर्वत्र प्रच्छन्नभावेन महान् हि कलकलो वर्ण्यमानो वर्तते। लोका विषयमिममधिकृत्य नानावादविवादान्, तर्कवितर्कान् मोहापोहान् युक्तीरनुमानानि च कुर्वाणा दरीदृश्यन्ते। मण्डलाधीशः आरक्षिविभागाध्यक्षादयोऽन्येऽपि च न्यायालयाधीशप्रभृतयोऽनेके वरिष्ठाधिकारिणोऽथ सर्वं तद्धनापहारकं चौरमभियुक्तमन्वेष्टुं सयत्नाः सन्तीति जनरवो महान् सर्वत्र श्रूयते। एतदपि च श्रुतं यद्बैङ्कसंस्थानस्यतस्य सर्वेऽपि कर्मचारिणोऽत्र चौर्यकर्मसन्देहे निगृहीता वर्तन्त इति। केचिन्नागरिकाः कथयन्ति, 'बैङ्ककर्मचारिणामेवान्यतमस्य कस्यचिदेतस्य हस्तकौशलचिकीर्षितमेतद्भवितुमर्हति।' अन्येषां केषाञ्चिदपि पायोऽनुश्रूयते, 'युगेऽस्मिन् धनलोलुपानां मानसी दुष्प्रवृत्तिर्मतिनिगूढा को नु खलु वेत्तुं प्रभवति ? परन्तु वराकस्य कुलीनस्य विपिनविहारिणः शिरसिमज्जतीव विपत्तिनिष्ठुरोल्कापातोपमाऽकस्मादापराधात्।' अपरे कथयन्ति,— 'मैवं ब्रूत ! विपिनः प्राणात्ययेऽपि नैव कदापि तथाकर्तुमपचेष्टेत ! यतः सहि

सदाचारवता सुशिक्षितानां शीलविनयदयादाक्षिण्यवतां प्रतिष्ठितानां श्रेष्ठानाम् नागरिकाणां श्रेष्ठिवर्याणां सुपुत्रो वर्तते।' केचिद्विचारयन्ति 'वस्तुतस्तु इमे नगरवासिनो वैङ्कस्यास्य कर्मचारिण एवापराधिनो भवेयुर्यत्तेषामेव सविधे कोषधनं सदैव सन्तिष्ठते।' इत्थं नानाविधा धारणा नगरवासिनामधिकारिणां सर्वसाधारणानां च हृदि बद्धमूलाः सन्ति। सत्यमसत्यं केनापहृतं धनमेतदिति याथातथ्येन न कोऽपि स्म वक्तुं पारयन्ति स्म। यद्यपि ताभ्यां परन्त्वन्यार्थै: द्धः कर्मचारिभिः साकमेव विपिनविहारी चाप्यभियुक्तत्वेन सन्देहे निगडित इति कोलाहलो व्याततान।

अथ प्रारम्भिकान्वेषणानुसन्धानादनन्तरं सर्वेऽप्येतेऽभियुक्ता विधिविधाननियमानुसारमावश्यकत्वेनाभियोगस्थापनपुरस्सरं न्यायालयस्य निर्णयार्थं प्राहीयन्त। प्रारक्षिविभागाध्यक्षेण न्यायानुसन्धानाय रहस्योद्घाटनाय चाभियोगे ते तु सर्वेऽपि चाभ्युपाया प्रयत्नाश्च विहितावैकल्पिकश्चौरो निर्णीयेत। अनेकेषां साक्षिणां, कर्मचारिणामधिकारिणां, सर्वकारपक्षस्य वाक्कीलानामभियुक्तानां च वक्तव्यानि न्यायाधीशेन यथायथलिपिबद्धान्यक्रियन्त। अभियुक्तानां, तत्सम्बन्धिनां सुहृन्मित्राणां, कौटुम्बिकानां बन्धुबान्धवपरिचितानां गृहेष्वपि चान्वेषणानुसन्धानार्थम् व्यग्रीयत। निपुणगुप्तचरा नियोजिताः। नात्र प्रसङ्गे कोऽपि चाभ्युपायः प्रयत्नो वाऽत्राशिष्यत। परन्तु स्पष्टतया नदमिथ रहस्योद्घाटनं बभूव। राज्यशासनविषयेऽत्र बहु पुरस्कारोऽपि विहितः। अधिकारिणो भर्त्सिता धर्षितास्तिरस्कृताश्च। केषाञ्चित् पदोन्नतयोऽवरुद्धाः, केषाञ्चन पदावनतयः कृताः केचन निलम्बिताः, केचन स्थानान्तरिताश्च पुरस्कारोऽपि भूयो भूयो घोषितः परन्तु चौरकर्मणोऽस्य रहस्यं चिरायानुद्घाटितमेव यथापूर्वं तस्थौ। अन्ते पञ्चवर्षानन्तरं स्वोत्तरदायित्वपरिपालने प्रमादात्स्वानवधानापराधेविपिनविहारी तथा द्वावन्यौ तत्सहकर्मिणौ कनिष्ठाधिकारिणौ न्यायाधीशेन दोषभाजावपराधिनौ चाघोष्य वर्षत्रयभोग्यं कठिनकारावासदण्डेन दण्डिताः। तदनन्त्रयोऽप्यपराधिनो वन्दित्वेन स्वदण्डं भुञ्जाना वर्तन्तेऽधुना। मासद्वयानन्तरं वरिष्ठन्यायालये पुनः प्रार्थनां कृत्वा स्वाभियोगस्य पुनर्निरीक्षणं कारयित्वा तौ द्वावन्यौ अधिकारिणौ निर्दोषौ घोषयित्वा निर्मुक्तौ मुहुः राज्येनैवाल्लसं हीनौ स्वनियोगस्य पूर्वपदयोर्नियुक्तिमाप्तवन्तौ। विपिनविहारी दण्डभुक् कृते।

( ५ )

तदिदं राजकीयं कारागारमासीत्। सर्वेऽपि वन्दिनो नित्यं नियमानुसारं प्रातःकालीनं शौचस्नानदन्तधावनादिकं दिनचर्याक्रमं निर्वर्त्य स्वस्वकर्मसु निं-

केषु मनागा दर्गेदृश्यन्ते। केचन वन्दिनः कारागारस्य तस्यान्तराद्याने वृक्षलतागुल्मपादपानामालवालेषु जलमिञ्चन्ति। केचिज्जलप्रवाहप्रणाली परिष्कुर्वन्ति। अपरे कारागारस्य कर्मशालायाः कक्षान् सम्मार्जयन्ति। केचनोद्यानवीथीरभयतो मार्गपरिष्करणाय तृणदूर्वादीनि कृन्तन्ति। अन्ये वृक्षमूलेषु मृत्तिकया साकं खाद्यं व्यामिश्रयन्ति। परे कक्षेषु हस्ताभ्यां वस्त्राणि वयन्ति। केचित् कम्बलान्यूर्णासनानि, दर्भासनानि च निर्मान्ति। अन्ये जलकुण्डसमीपे वस्त्राणि प्रक्षालयन्ति केचन मुद्रणालयप्रकोष्ठे पुस्तकानि मुद्रयन्ति पुस्तकबन्धनानि च साधयन्ति। केचन कर्मचारिणो वन्दिनामेतेषां कार्यकलापानां निरीक्षणं कुर्वाणा सन्ति। प्रहरिणश्च यत्रतत्रशस्त्रहस्ता इतस्ततः मावधानमटन्तः सूक्ष्मेक्षिकया स्वनियोगं परिपालयन्ति।

तदैव कारागारात प्राङ्गणे वर्तमाने सुविशाले खलु भवनेऽध्यक्षस्यैकं कार्यालयप्रकोष्ठोऽस्ति। तस्मिन् मध्यभागे सर्वोच्चे काष्ठमञ्चेऽध्यक्षमहोदयो निषण्णो वर्तते। तत्पार्श्वयोर्द्वयोः सम्मुखे चानेके कर्मचारिणो लेखकाष्ठङ्कणकर्मकराः कोषाध्यक्षादयः पत्रसहतीनां मध्ये स्वकार्याणि सम्पादयन्तो विद्यन्ते। अत्रैव कार्यालयस्यास्मिन् प्रकोष्ठस्यैकस्मिन् कोणे काष्ठफलकस्य सम्मुखमवाङ्मुखमासीनः किमपि लेखनकार्यं कुर्वाणो वन्दी स्थूलसजकमेकं काष्ठासनमधिष्ठितो विपिनविहारी चापिवर्तते। स खल्वन्येषां कर्मचारिणामपेक्षया मनाङ् मलिनवेशः प्रवृद्धश्मश्रुकूर्चो विवर्णदीनमलिनमुखमण्डलो मौनमास्थितः कांश्चिन् कर्गदमहतीर्गृहीत्वा कारागृहाध्यक्षस्य हस्ताक्षराणि कारयितुम् विनम्रभावेन प्रतीक्षमाणोऽध्यक्षस्य मञ्चाग्रे समुपतिष्ठते। क्षणानन्तरं तं तत्रोपस्थितमालोक्याध्यक्षोऽब्रूत—

अध्यक्ष — 'आगः, विपिन ! आयाहि, सम्पिद्धानि तानि कर्गदानि ? अपि त्वमधुनामे हस्ताक्षराणि तेषु कृतानि कामयसे ??'

विपिन — 'श्रीमन् भवदाज्ञानुसारं साधितानि सर्वाणि सेवकेन मया। भवद्धस्ताक्षराण्येव केवलमवशिष्यन्ते।'

अध्यक्ष — 'आनय तावत्तान्यतिप्रयोजनीयान्यावश्यकानि च त्वरितप्रेषणीयानि खलु वर्तन्ते। श्वोवा परश्वो वा मन्त्रिमहोदयस्यागमनमप्यत्र सम्भाव्यते।'

विपिन — 'महोदय ! कोऽसौमाननीयोमन्त्रिप्रवर ?'

अध्यक्ष — 'अये ! किं न जानीषे त्वम् ? त एते सन्ति गुप्तमहोदयाः !'

विपिनविहारी किलाश्रुपूर्णाभ्यां नेत्राभ्यां तमध्यक्षं निरीक्षमाणः स्तब्धो।

अयमस्य कर्तव्यात्मनो हस्ताक्षराणि कुर्वाणो मध्ये विपिनविहारिण-
मालोकयत्। बोचत्—

अध्यक्ष — 'अरे ! त्वं किमर्थमनवच्छिन्नातुरोऽसि ! तव स्वास्थ्यमपि च दिनानु-
दिनमपक्षीयमाणमिव दृश्यते !! मास्मिमात्र चिन्तां कुरुष्व ! गच्छति
काले सर्वं शमनं भावि। अलं चिन्तया ! आश्वस्तो भव।'

विपिन — महोदय ! निर्दोषोऽप्यहं भाग्यविपर्ययाद् दण्डभागभूवम् '

अध्यक्ष — अवश्यम्भाविनो भावा भवन्ति महतामपि' नदत्र माशुच !'

विपिन — श्रीमन् ! कथमिवाश्वासयामि तातनान दण्डभोग्यान् दुःखिमान !
क्षणोऽपि च युगायते ! स्वकुटुम्बचिन्ता, जीविकार्त्ति सर्वमपि मे
विनष्टम ! चौर्यकलङ्कश्च मम शिरस्यापतित ! मम गृहिणी, बाल-
काश्च सर्वेऽनाथा क्षुत्पामकण्ठा रुदन्तश्च कणकणमवसीदन्ति !' ( एवम्
वदन स दीर्घमुष्णं च निःश्वस्य मन्दकण्ठावरोध सगद्गद नेत्राभ्यां स्थूल
स्थूला अविरता अश्रुधारा प्रवाहयति )

अध्यक्ष — 'समाश्वसिहि भो ! 'समय एव करोति बलाबलम् !' अत्र न कि
कष्टम् ? नरकनिर्विशेषेऽप्यत्र कारागारे त्वदर्थं यत्समायत्तमभूत्तत्सर्वं
सौविध्यं मया विहितम्। भूयोऽपि च यथावसरं त्वत्कृते या या सुविधा
भवितु शक्यास्ता सर्वाः प्रदास्येऽहं ते। अधुनावधि त्वमन्येभ्यो बन्दि-
भ्यः पृथग्भूतो मम कार्यालये निविशन्त्वेन कार्यं कुर्वाणोऽसि। अन्यथा
बन्दिनामपेक्षया सुस्वादु स्निग्धं भोजनं घृतदुग्धशाकादिसहितं भुङ्क्षे।
कठोरदण्डेन दण्डनीयोऽपि त्वमत्राल्पायासमपि सुकरमेव कार्यं सम्पा-
दयसि। मासान्तरे वा पक्षान्तरे वा तव पत्नी, बन्धुबान्धवा, सुहृदो,
मित्राणि चात्रागत्य विनैव कमपि प्रतिबन्धं, विनैव समयावधि चिराय
त्वां मिलन्त्यालपन्ति च। एवं सत्यपि किमर्थमतिमात्रं विषीदसि ?
अपि त्वं जानासि नन्वेतत् सर्वमहं किमर्थं करोमीति ? तव पितामहे
नवदाहमपि च महतो दुःखादिमाचितोऽभूवम् तस्मादेव तुभ्यमिमं मे
नियमपराधीनस्याप्यपवादरूपा सहानुभूतिरासीत्।'

विपिन — कृतज्ञोऽस्म्युपकृतोऽस्म्यनुगृहीतोऽस्मि भगवन् ! सर्वमेतत् तैः सम्।
भवदुपकारपरम्पराणां तु नास्त्येव मे जीवनपर्यन्त कापि निष्कृतिः।
श्रीमन्तोऽपि दीनदीनेऽवसीदति मत्कृते स्वयमेवोदारहृदयेन द्रवन्तीति
भवमहत्त्वानुरूपम् पामरोऽहमधम किं ब्रवाणि ! परन्तु दीर्घकाल-

भीतोऽस्मि दण्डभोगस्य समयोऽद्याप्यवशिष्यत इति मां दुःखाकरोति धीमन् ! विषमेऽस्मिन् सङ्कटकाले भवन्तमत्रभवन्तं विहाय नान्ये वान्य कोऽपि मे सहाय । प्रसीदतु महाभाग । मम हृदयदौर्बल्यं क्षमस्व प्रभो !'

अध्यक्ष — 'जानेऽहं तत्त्वतो यत्त्वं कुलीनोऽसि सुशिक्षितोऽसि, सचेतास्त्वमसि । स्वाभिमानस्य त्यागेन यत्त्वदनितमानेनाऽप्यहं जानामि, परन्तु दण्डस्तु तावत् कथमपि भाव्य एव । नान्या गति । नास्त्युपायान्तर ।'

त्रिलि — कुलकलङ्केनानेन पापकर्मणा जघन्येन मया सर्वोऽपि परिवारो लाञ्छित इत्येव मे महद् दुःखमसह्यम् !

अध्यक्ष — 'नत्यमान्य त्वम् ! समाश्वसिहि । नाहं तव मुक्तिविषये किमपीदानीं वक्तुं पारये परन्तु मन्ये सम्प्रत्यत्र माननीय मन्त्रिमहोदय कारागार-निरीक्षणार्थमागते त्वद्विषये किमप्यावेदयितुं चिन्तयामि । धैर्यमव-लम्बस्व । नैतत् किमपि कस्मायपि कथमपि वक्तव्यम् । शान्तचेतसा स्वकार्यनियोग सावधानं परिपालय ।'

( ६ )

अथैकवर्षप्राय समयो व्यतीयाय । एकदा सम्वादोऽयमावेदित यद्धि सम्मा-ननीयो राज्यमन्त्री नगरेऽत्र शिक्षादिभाग-कारागृहादीनां सर्वकारस्य कार्यालयानां निरीक्षणायागन्ताऽपिरादेवेति । मण्डलाधीश-कार्यालयतश्चापि प्रामाणिकं सूचना-पत्रमेतद्विषयकं सर्वकार्यालयेषु प्रसारितं । तिथ्यादिकं च सर्व सुनिश्चितं तस्य सञ्चारपत्रे विज्ञापितमभूत् ततोऽन्यान्यकार्यालयेष्विव कारागारेऽपि च तत्सत्कार-सम्भावनानुरूपमातिथ्यायोजनं क्रियमाणमासीत् । मण्डलाधीशप्रमुखा सर्वेऽपि च वरिष्ठाधिकारिण स्वयं कारागाराध्यक्षो, नागरपालिकायाः सभापति, कर्मचारिणश्च नगरे, कार्यालयेषु च व्यवस्था सुविहिता निरीक्ष्यमन्त्रिमहोदयस्यागमनं प्रतीक्षमाणा सन्तिष्ठन्ते । बन्दिनश्च सर्वे कारागारप्राङ्गणैकदेशे पङ्क्तिबद्धाः समुपतिष्ठन्ते । स्थानीयेभ्यो नानाकार्यालयेभ्य आसनास्तरणानि, वेत्रासनानि, काष्ठपीठपर्यङ्कादी-न्यानाय्यानि कारागारस्य भवनप्राङ्गणमध्ये वृक्षलतानां सघनच्छायाकुञ्जमध्ये मण्डपोऽस्ति विरचित । मुख्यद्वारं सुभवनं पुष्पपादपानां श्रेण्यो यथाक्रमं सुसज्जिता शोभन्ते । प्रवेशद्वारे पत्रपुष्पतोरणध्वजपताकादयश्च दोधूयमाना सन्ति ।

अथ क्षणादेव मन्त्रिमहोदयस्य मरुत्त्वरयानं विमानस्थलमाजगाम । तद्या-नमनुसरन्ति चोभयत्रान्यान्यपि च मुक्तयानान्यादायुधेषु मन्त्रिमहोदयस्य सचिवादय

मट्यास्त्रिणोऽभवन् । मण्डलाधीशेनान्यैश्च वरिष्ठाधिकारिभिः कारागृहाध्यक्षेण च, मङ्गलधूनन मन्त्रिण स्वागतविधि सोपचार साडम्बर चोपपादयदभि माल्यार्पण-मकारि । मण्डपाधो मुख्यमञ्चे सुखमुपविष्टे मन्त्रिमहोदये, सर्वजनसमुदाये च कारागृहाध्यक्षोमुद्रिताक्षर स्वागतभाषणमपाठीत् । ततो मन्त्रिणापि पूर्वलिखितम् सक्षिप्तमभिभाषणमपाठि । तदनुमति प्रवरोऽध्यक्षाधिकारीयो बन्दिगृह निरीक्षमाण वशात् वस्र वधाम । व्यवस्था सर्वा वीक्ष्य मन्त्रिणा सन्तोषभाव प्रकटीकृत तत कार्यालय गत्वा मन्त्रिमहोदयस्तत्र त्वमन्न प्रबन्धम्, कार्यपद्धति सञ्चालनक्र-मादिक सर्वमद्राक्षीत । मन्त्रिमसचिवेन निरीक्षण- विवरण विलिख्य सरक्षितम् । नव कारागारे भविष्यति सुधारोन्नतिविषयका केचन प्रस्तावा मौखिका लिखित-रूपाश्च । अध्यक्षेण मन्त्रिमहोदयस्य पुरत उपस्थापिता । अन्ते च बन्दिन सर्वे प्रत्येक मन्त्रिमहोदयेन दृष्टा तेषा सुखदुःखादिक च पृच्छता मन्त्रिणा तदपराध-विषयेऽपि किमपि पृष्ठम् । भविष्यति तद्दयपरिवर्तनस्य कृत, सदाचरणाय च बन्दिन सोपदेश प्रबोधिता । एव कुर्वता तेषा विपिनविहारिण क्रमप्राप्ते वारे समायात तमुद्दिश्य मन्त्रिमहोदयेन कारागृहाध्यक्ष पृष्ट — 'कोऽसौ ? कश्चास्या-पराध ? को दण्ड ?'

अध्यक्ष — श्रीमन् ! विपिनविहारीति नामासौ बन्दी । बैङ्कधनापहरणकाण्डे स्वनियोगे प्रमादाचरण, स्वोत्तरदायित्वेऽपसखलनमस्यापराध । वर्षत्रय भोग्यश्चास्य कठिनकारावासदण्ड । दण्ड भुञ्जानोऽसावर्धवर्षप्राय समय व्यतीतवान् ।

मन्त्री — 'अरे ! किन्नामासि त्वम् ? ( विपिनमुद्दिश्य )

विपिन — 'विपिनविहारी, महोदय !'

मन्त्री— 'कस्यात्मज त्वमसि ? किञ्चाते पितुर्नाम ?'

विपिन — श्रीमन् ! गगनविहारी ममपितामहोऽवधविहारी च मे पिता ।'

मन्त्री — क्वते पिताधुनावर्तते ? पितामहश्च कि कुरुते ?'

विपिन — 'मातापितरौ म तीर्थाटनयात्रागतौ स्त । पितामहश्चममगार्हस्थ्यादिरक्तो हरिद्वारमधिवसति ।'

विपिन — 'किमर्थ त्वया बैङ्कधनमपहृतम् ?'

विपिन — स्वामिन् ! नाहमपहृतवान् धनम् । न जाने केनापहृत तत् ? प्रमादात्

स्वोत्तरदायित्वादपस्खलनादनवधान दोषापराधादेव तमिम दण्डमहमलभे ।'
( अश्रुपूर्णलोचनोऽवाङ् मुख पश्यति )

मन्त्री — 'अपि त्वमसि निर्दोषः ?

विपिन – 'सर्वथा निर्दोषोऽस्मि प्रभो ! हतभाग्यमेव मे मामपराधिन प्रामाणयत् । वैकसम्यानस्य धनमरक्षणे मम प्रमाद एवापराध ।'

मन्त्री — 'अवश्यमेव मोक्तव्यो दण्डोऽयते प्रमादज । अस्तु, भविष्यति मैव कदापि प्रमाद !'

इत्यत्रमेणावशिष्टान बन्दिनोऽन्यान्यानपि चैवमेव किमपि किमपि पृच्छन् मन्त्रिमहोदय पुनर्मण्डपमागत्योपविष्ट । सचायचषकपान स्वल्पाहार फलादिमहितमुपभुज्य ततो राजकीयमतिथिभवन जगाम ।

( ७ )

अद्य रात्रौ सम्माननीयमन्त्रिमहोदयस्य स्वागत सत्कारार्थं मण्डलाधीशेन विराट् प्रीतिभोजोऽप्यायोजित । तत्र भोजे बहवोऽधिकारिण काग्रेसीया नेतारो गण्या मान्या – प्रतिष्ठिता नागरिका विद्वास प्राध्यापका कवय कलाकारा धनिकाश्चामन्त्रिता सन्ति । यथा समय समागते मन्त्रिमहोदये समारोहस्यास्य कार्यक्रमा प्रारभन्त । सयुक्त सगीताराधन– कविसम्मेलन, पानगोष्ठी च प्रारभेताम् । तत प्रीतिभोजोऽपि च सानन्द न्यवर्तिष्ठ । समाप्ते हि प्रीतिभोजे यदा मन्त्रि महोदयो दीर्घाया जनपङ् क्ति मतिभ्राम्यति तदाम प्रस्थानमगलार्थं करबद्ध प्रणामोन्मुख कारागाराध्यक्ष मद्राक्षीत् । तत करसङ्केतेनाहूय वार्तालाप कुर्वाण प्राङ्गणैककोण एकान्ते नीत्वाऽवोचत् —

मन्त्री — 'स बन्दी विपिनविहारी भवन्मते कीदृशोऽस्ति ? अथकारागारे तस्य व्यवहार– वर्तनादिकञ्च किंविधम् ?'

अध्यक्ष — 'नाह किमप्येतद्गत विशेषेण जाने परन्त्वेतदह नून जानामि यत् स कुलीनोऽस्त्यकोनागरिक । दौर्भाग्यात सोऽपराधित्वेन दण्ड भुञ्जानोऽस्ति । कारागारेऽपि स शिष्टजुष्ट व्यवहरति, तत्रत्यान्नियमाश्च सर्वात्मना परिपालयति सानुशासनम् ।'

मन्त्री — 'तद्भवान किमर्थ तत्कृते कमपि मुक्त्युपाय न चिन्तयति ?'

अध्यक्ष — नियमाधीनोऽहं किमिव हि कर्तुं पारये ? तथापि यावन्मदायत्तं तावत् सहानुभूति पूर्वकं व्यवहरामि। अन्यबन्दिनामपेक्षया सौविध्यं च तस्मै प्रयच्छामि।'

मन्त्री — 'श्रूयताम् ! आगामिनि गणतन्त्रमहोत्सवदिने राज्ये केचन बन्दिनो महामहिमराज्यपालस्याज्ञया मोचयिष्यन्ते। अस्माकं मन्त्रालयाद्राज्यान्तर्गतानां बन्दिनां सर्वेषां सूच्यो नन्वामन्त्रिता सन्ति। यदि च भवानुचितमिव कल्पयति, तदा विपिनविहारिणोऽपि नाम स्वानुशंसा पूर्वकम् सम्प्रेष्यताम्। अहमपि च तत्कृते राज्यपालमहाभागं किमपि निवेदयिष्यामि। अतः परं तद्भाग्यम्। विषयोऽयमावतीव गोपनीयः। सावधानं समर्यादं च रक्षतु भवान् मन्त्रमिमम्।'

अध्यक्ष — 'यथाज्ञापयति मान्योऽभवान् मन्त्रिमहाभागः। तथैव करिष्येऽहम्।'

एवमुक्त्वा मन्त्रिमहोदयो मृत्तरयानमारुह्यातत प्रतस्थे।

( ८ )

अद्य गणतन्त्रदिवसस्य महापर्वोत्सवसमारोहो वर्तते। प्रातरारभ्यैव नगरे सर्वत्र लोकाः — विशेषतो राजकीया अधिकारिणः कर्मचारिणः स्नातः सर्वसाधारणाश्च तमिमं महोत्सवमुद्यापयितुं हर्षनिर्भरमानसाः सोत्साहाः सोद्योगाः सयत्नाश्च दरीदृश्यन्ते। राजकीयेषु कार्यालयेषु सर्वेषु प्रातर्ध्वजवन्दनं, राष्ट्रीयगानं, प्रार्थना, भाषणानि च सम्पेदिरे। विद्यालयपाठशालादिषु छात्रेभ्यो मिष्टान्नं व्यतीर्यत। नगरे दीनेभ्योऽनाथेभ्य, कारागारेषु बन्दिभ्यश्च विशिष्टं स्निग्धं मिष्टान्नभोजनमदीयत। अनाथमहाशयान्धविकलाङ्गेभ्यो वस्त्राच्छादनादीनि व्यतीर्यन्त। सायङ्कालीनेषु वृन्देषु खेलाकूर्दनानां सांस्कृतिकानामायोजनानां, नाट्याभिनयसङ्गीतगोष्ठीनां, कविसम्मेलनानामिन्द्रजालकौतुकप्रदर्शनादीनां, भाषणव्याख्यानानां, दीपावलिदृश्यानां कार्यक्रमाश्च सडिण्डिमघोषं समुद्घोषिताः। सर्वत्रैव हर्षानन्दाह्लादपूर्णमिमप्यपूर्वमेव वायुमण्डलं सर्वजनमानसोल्लासकरमासीत्।

सार्द्धदशवादनप्राये समये स्थानीये कारागृहे बहुदिनानन्तरं मधुरं स्निग्धं सुस्वादु सरसं च मिष्टान्नमातृप्ति भुक्तवन्तो बन्दिनोऽद्यावकाशदिनमिति स्वकीयेषु कोष्ठकेषु विश्रामसुखमनुभवन्तो निश्चिन्ततया प्रसन्नाः स्वस्था सुदिनमात्मानं मन्यमाना मोदन्ते। कारागाराध्यक्षः स्वकार्यालये स्वेनासनमध्यासीनोऽस्ति। बन्दी

विपिनविहारी कार्यालयस्य तस्य कक्षकोणे भूमावेवार्द्धं निद्राणः स्तिमितलोचनो मुहुर्मुहुर्जृम्भमाणो विमना विषण्णो निषण्णश्च वर्तते। तथा भूतं विपिनविहारिणमालोक्याध्यक्षमहाशयो विनोदगर्भया गिरा सानन्दस्मितं तमवदत्—

अध्यक्ष — 'अये, विपिन ! अपि त्वां निद्रा बाधते ? तत एव त्वं भूयो भूयो जृम्भसे खलु ! मन्ये, ऽद्य यथेच्छम् भूरिभोजनादेव त्वमेवमालस्याभिभूतोऽसि।'

विपिन — ( निर्लक्ष्यमिव पश्यन् ) 'नहि श्रीमन् !'

अध्यक्ष — 'अपि सत्यं वदसि ?'

विपिन — 'महोदय ! सत्यं वदामि।'

तावदेव केनापि भृत्येनाध्यक्षकक्षं प्रविश्य विज्ञापितम्— 'श्रीमन् ! मण्डलाधीश महोदया समायान्ति। मूत्तर ध्वनि श्रूयते।' अध्यक्षो यावदुत्थाय सरभसं कारागारस्य प्रवेशद्वारमायाति, तावदेव मण्डलाधीशोगोपुर सम्मुखमाजगाम। अथान्तः प्रविश्य च स वेत्रासनमुपविश्य स्वकञ्चुकस्यूतात् पत्रमेकं माकृष्य तत्सापठन्मानो राजाज्ञामिवाश्रावयत्—

"अद्य तावद् गणतन्त्रदिवसमहोत्सवः स्वाधीनभारतराष्ट्रस्यैतस्या स्माकं वर्तते। केन्द्रिय सर्वकारस्यादेशानुसार राज्यपालमहाभागो महामहिमोऽस्य राज्यस्य मन्त्रिमण्डल तत्सम्बद्धं मन्त्रालयं चाज्ञापयति यद्धि स्थानीये कारागारे निगडिताग्निम्नाङ्कितान् पञ्चापराधिनो बन्दितो मण्डलाधीश स्वयं तत्र गत्वाऽध्यक्षमादिश्य मोचयतु— (१) सीतारामः (२) साधुदासः (३) रामभजनः (४) दुर्गाचरण (५) विपिनविहारी चेति।"

मण्डलाधीशस्यागमनं ज्ञात्वासर्वे कर्मचारिणो बन्दिनश्च तत्र कारागारप्राङ्गणे समवेता आसन्। तेषाम् सर्वेषामुपस्थितानामेव मण्डलाधीशसमक्षमेव प्रोक्तास्त इमे पञ्चापि बन्दिनो लोहकारावन्धनानि विच्छिद्य तत्कालमेव निर्मुक्ताः। स्वातन्त्र्यमाप्य ते पञ्चापि जना हर्षनिर्भरमानसा स्वगृहान् ययुः।

( ६ )

अथ च गृहं प्राप्तो विपिनविहारी द्वारं प्रविश्य प्राङ्गणमध्ये स्थितः स्वपत्नीं मृणालिनीमुच्चैः स्वरं समबोधयत्— 'अये ! प्रिये !! मृणालिनि !!!

प्रियतमे !!! क्वनुक्वनुवर्तसे ? किं वा कुर्वाणासि ?? इहागच्छ ! पश्य, कारा-गृहान्निर्मुक्तोऽहं गृहं प्राप्तोऽस्मीदानीम् !! आयाहि ! आयाहि भो ! क्वासि त्वम् कल्याणि ? किं करोषि ??'

आकर्ण्य चिरपरिचितकण्ठ-स्वरं गृहान्तःकक्षतो बहिरागत्य मृणालिनी सहसाकिमत्यन्यदद्भुतं विस्मापकमवितर्कितमसम्भवमिव सम्मुखे साक्षाद्द्दृश्यमानं प्रत्यक्षं पश्यन्त्यपि स्वनेत्रदर्शनं न विशश्वास। केवलं मौनमास्थिता दिङ्मूढा विभ्रान्ता चित्रलिखितेव कामपि विचित्रामेवात्मनो मनो दशां, मानसीं विह्वलतां गोपायितुम-पारयन्ती विस्फारितलोचना जडतां गतेव निर्निमेषं ससम्भ्रमं पश्यन्ती तस्थौ। कञ्चित्कालं विपिनं विलोक्य महता काठिन्येन स्वात्मचेतनामुपलभमाना, यथार्थ-ज्ञातविश्वासा, लज्जमाना, प्रवेपमानाङ्गयष्टिः, प्रस्वेदक्लिन्ना, मूर्च्छन्तीव, विगल-दश्रुधारा सवेगं विपिनसमीपं कयापि मनोवाचामगोचरया प्रेरणया प्रसह्य तथाकर्तुं नियोज्यमानेवागत्य तच्चरणौ ववन्दे। प्रणयाश्रयर्षहीसद्धोसगद्गदं चोवाच—

'स्वामिन् ! किमिदं पश्यामि !! स्वागतं ते मम हृदयसर्वस्व !!! स्वागतम् ! जीवितेश्वर !! दयित !!! प्राणनाथ !!! स्वागतं ते !!! कथमिव निर्मुक्तो भवान् बन्दिगृहात् ? दण्डभोग्यात् कालावधेः पूर्वमेव हि कथं प्राप्तो भवानत्र ?? स्वागतं ते प्राणवल्लभ ! स्वागतम् !! धन्योऽयं दिवसः !!! धन्य-श्चासौ क्षणः !!! महत्सौभाग्यस्य विषयोऽयं यदहं प्राणनाथ, स्वामिनं भर्तारं गृहागतं साक्षात् पश्यामि !!!'

विपिन – 'प्रिये ! समाश्वसिहि !! प्रकृतिस्था भव !! [ महतीयं दीर्घा च मम मुक्तेः कथा। प्राप्तकालं विस्तरेण त्वां कथयिष्यामि ! बाले ! मुग्धे !! मन मामुच। आनय तावदासनम्, जलं च पातुमिच्छामि। कृतभोज नोऽस्मिसतृप्तः। आम्, आनीयन्ताम् तावन्मम क्षौरकर्मसाधनोपकरण-मञ्जूषादर्शादीनि। स्नानार्थं जलं, धौतानि वस्त्राच्छादनानि चोपस्था-प्यन्ताम्।'

मृणालिनी – 'क्षणात् सर्वं साधयामि दासी तेऽहं स्वामिन् ! उपविश्यतामत्र। इदमा-सनम्। न जाने स्वरमाणापि शीघ्रतां कर्तुं न पारये तदिदमर्थम् ? जाग्रदवस्थायामपि च स्वप्नमिवानुभवन्ती स्वकर्तव्यं परिपालयितुं नाऽमन प्रभवामि।'

एवं वदन्ती मृणालिनी स्वपतिर्विपिनस्येच्छानुसारेण सेवार्थं यथोक्तं कर्तुं व्यवस्यति।

अथ कृतशौचस्नानो विपिनविहारी वस्त्राणि परिधाय गृहीतविश्रामो मध्याह्नोत्तर मृणालिन्या प्रणयचाटुपूर्णैर्दुर्लभैर्वचोभिः जागरितो विराम शय्यामुत्सृज्य च वैत्रासनमध्यासीनोऽस्ति साम्प्रतम्। तत्सम्मुख भूमावेव मृणालिनी चापि निषण्णास्ते। सुखसुप्तविरहयो तयो परस्परमित्थ सम्भाषण क्रमेण वार्तालापा प्रावर्तन्त।

मृणालिनी – 'दयित ! प्राणपते !!! अतीव दुर्बलताङ्गतो भवान् ! दृश्यते ! मन्ये तत्र कारागारे निर्दयप्रपीडितो भवांस्तत्रत्यैः क्रूरैः कृपणैः कठोरहृदयैर्निष्ठुरैश्च दण्डिनो भवेत्।'

विपिन 'प्रिये ! नाम्येत्र मत्रथागतोऽपि तादृश किमपि कष्ट न चिन्तयामि। तथाहं तत्र आरम्भतस्का पर्यन्तम सर्वत्र सुखमातिष्ठम्। स्वगृहनिःशेषमेवाहं तत्र कालमत्यवाहयम्। वस्तुतस्तव विरहादन्यत् किमपि दुःख नान्वभवम्। सत्य ब्रवीमि। आम् किमपि दौर्बल्यमिवालक्षयसि तत्कारण त्वदमेव भवितुमर्हति, यदहं सदैव तच्चिन्तयानोऽभूव यन्न कदाचित्सन् मृणालिनी स्त्रीहृदयसुलभयाबला जनस्वभावभीरुतया वा रहस्य भेद कुर्यात्। तेत्याशङ्कयैवाहं मनाग् दुर्बलता गत स्याम्। नान्यत्किमपि मम क्षीणत्वे कारणान्तरमास्ते। आश्वस्ता भव। स्वस्थोऽस्मि, सकुशलोऽस्मि सानन्दोऽस्मि च प्राणवल्लभे !'

मृणालिनी – 'आश्चर्य मे भवति नन्वेवविध भवद्वच श्रृण्वन्त्या' ।'

विपिन— 'अयि स्वभाव मुग्धे ! मृदन्त करणे !! भीरो !!! प्रिये मृणालिके ! तदिद द्रव्यापहरणकलाकौशलमपि 'योग कर्मसु कौशलम्' इतिवद् योगसाधनतपश्चर्येव दु साध्य दुष्करच कर्ममन्यताम्। तदद्य मम योगसमाधिश्चरमा सिद्धि प्राप्तवान्।'

मृणालिनी– ( समन्दस्मितम ) 'कान्त ! भवानधुना मम कोऽप्यैन्द्रजालिक इव प्रतिभाति। धन्योऽहिनेकैवम् ! धन्या न मायाविता ! मदृते को दा तव मायामिमामीदृशीमिदमित्थ वेद ! पर सत्यमेवाहित्वयातीवयाश्चर्यकर दुस्साहसिक दुष्कर च कर्मानुष्ठितम् !'

विपिन :– वस्तुतस्त्व न जानीषे यथार्थतो जगज्जाल प्रपञ्चमधुनातनयुगीनम्। पुनरिदानीन्तन स्वराज्याभिधान दुश्शासनमराजक त्व सर्वथा न परिचिनुषे। तत एव विकल्पसे। अधुनात्र देशे योजनापकौशलमिव वर्षाकालीन जलमिव सर्वतो धनमपरिमेय प्रभूतधारासारम् प्रवहद् वर्तते। तच्च

सज्जना सदाचारा परलोकभयाद्‌बिभ्यतो ह्यास्तिका भोक्तुं न प्रभवन्ति परन्तु मादृशा कपटपटवो धूर्ता वञ्चनाकुशला विदूषकशिरोमणय एव तदुपयोग कर्तु सक्षमा भवन्ति। सत्यमेव मन्यस्व मद्वच।'

मृणालिनी 'अस्तु तावत्। अथाधुनावाभ्यां किमनुष्ठेयम्? को हि जीवनक्रम स्वीकरणीय ?? केन विधिना च व्यवहर्तव्यम्??? त मे स्वयोजनानुरूप निरूप्यताम्। तथैवाहमाचरेयम्।'

विपिन 'इदानीन्तु द्वाभ्यामपिचावाभ्या दम्पतिभ्या अत्रैव दुग्धदग्धाभ्यामकिञ्चनाभ्या दुर्भाग्यविडम्बनोत्पीडिताभ्यामिहैव नगरे वस्तव्य खलु। मम मुक्ते सम्वाद स्वमाहात्म्यात् स्वत एव सर्वत्राचिरादेव प्रचारमाप्स्यति नाम नूनम्। ततो बन्धुरान्धवा मित्रसुहृद परिचितास्तथापरेऽपिता हितैषिण कौटुम्बिका सजातीया प्रतिवेशिनोजनाश्च सर्वेऽस्मद्‌गृहमना ह्‌ताश्चाप्यवश्यमागमिष्यन्ति, ते च सर्वे कृतका सहानुभूति, कृत्रिमां समवेदना, गतानुगतिका, मिथ्याचारवचनावलिगर्भा हितैषणा, साडम्बरां बन्धुता च मत्वराश्रुलील स्वविकीर्षिर्तैरभिनाटयिष्यति ध्रुवमिति मम मानवहृदयमनोविज्ञानम्। तथावाभ्यामपि तत्सामान्य तथैव व्यवहर्तव्यम्। ततोयथेच्छ करिष्याव। (सगम्भीरभावम्) अपि तदशोनिगहृत मुद्रामिन धन त्वया प्रयत्नपूर्वक सुरक्षित तव सकाशम्?'

मृणालिनी – (समन्दमधुरस्मित विपिनविहारिणो मुखमुद्रा प्रेक्ष्य) अस्त्येव तत्तथैव निगूढ सुरक्षित मातृजारमिव यथा भवान् मे नि क्षेपरूप समर्पितवान्।'

विपिन – 'अस्तुतावत्त्वमपि च मेऽर्धाङ्गी नवयुगक्रान्तिकारिणी स्वराज्योत्तर शिक्षा दीक्षासस्काराचारवती वीरवधू। त्वय्येतन्मम् विश्वासानुसारं सर्वयोग पद्यते। अथ पुनरवधीयताम्। अद्य तावद्‌गणतन्त्र दिवसमहामहोत्सव। नात्र कोऽपिचात्रागमिष्यति। सर्वेऽपि च नागरिका लोकास्तमिममुत्सवमुपायपितु मत्तोदामा इव गङ्गाम्बिाप्रवाहमनुसरतस्तन्मनस्कास्तद्‌गत प्राणास्तत्सोत्साहास्तच्चेष्टास्तत्समर्पितशरीरमनोवृत्तयस्तत्रैव जीवनसारत्व विन्दमाना मोमुद्यन्ते। आवा तावत्स्वगृहमेवाधिवसाव अद्य रात्रौ तमिम महोत्सवसमागेह सानन्द समुत्स च द्विरागमनसमये मधुरजनीमिवोपाचयाव, यमुम्मर्व निमित्तीकृत्याह कारागारान्निर्मुक्तोऽत्र स्वामुपनमोऽस्मि, मृणालिके! बाले!!!' मुग्धे (एव वदन् विपिनविहारी स्वपत्नी ता मृणालिका भुजपाशे सुदृढ गृहीत्वालिलिङ्ग चुचुम्बश्चिरम्)

# आत्मवेदना

प्रभाकर शास्त्री

धौंक्लो जात्या चमकार आसीत । स सवर्णाना क्षेत्रेषु हलादिपरिचालनेन स्वजीवन यापयति स्म । परिवारस्थेतर सदस्या अपि श्रमादिकैर्यत्किञ्चिदर्जनम-कुर्वन् । मूलत त सर्वे श्रमिका आसन् । प्रातरारभ्य सूर्यास्त यावत् श्रम कुर्वन्तोऽपि स्वल्पमेवार्जन कर्तुं पारयामासु । सर्वेषा सम्मिलितेन परिश्रमेणापि नोदरपूर्तो क्षमास्ते । वृत्तिरहिते तु दिवसे सर्वे एव उपवासमकुर्वन । सत्यमेव तेषा निर्वाह कृच्छ्रतया समपद्यत ।

अद्य तु धौंक्लो विपद्ग्रस्त इव आभासते स्म । काऽपि नव विपद भृश-मविनश्नात त वराकम् । न केनाऽपि गृहसदस्येन सहाऽऽलप्तुमियेष स । तदीयाऽन्त वेदना तु मुखमुद्रया प्राकट्यमवाप । मन्त्रौषधिभि मर्दद्ववीर्य सर्प इव स मनस्येव क्रुध्यति स्म एतेनान्त वनेशेन तदीयो देहो यदा कदा भृशकम्पत ।

प्रातरद्य ग्रामणी स्वय तदीयोटजद्वारे समागत्याऽगर्जत्— ' ह्यः तवात्मजा राधा कृषिकार्यमसमाप्यैव क्षेत्रात् पलायिता । न च तया किमपि कारणमाभिहितम् । एतादृशी वृत्तिर्न खलु क्षम्या । अद्याऽपि न स्थास्यति चेत् साऽस्माक क्षेत्रे सूर्यास्त यावत्तदा न स्यात्तु शक्ष्यसे स्माकं ग्रामे ।"

ईदृमित्थं तन्निर्जगाम स । धौंकलस्तु मूक सन् किमपि जगाद । स तु गच्छन्त तमुल्लीडक स्वदृष्ट्या दग्धुमिव कामयामास । न किमप्युत्तर प्रायच्छत् स इतिकृने स्वात्मान बहुशोऽजुगुप्सत । क्षेत्रात् प्रत्यागतया राधया सर्वमेव सभाषित मासीत् । ग्रामाध्यक्षस्य पुत्रणैकान्त सदृश्य तामालिङ्गितु प्रायतितम्, तया च शीघ्रमेव ततत पलायितम् । श्रुत्वैतत् स भृशप्रकुपित, पर नाऽक्षमत स प्रतिकर्तुम् । न श्रोष्यति ग्रामणी क्षणमात्रमप्येतत् । स तु राधामेव गर्हयिष्यति । तदनुसार तु राधया एव तमाकष्टं प्रयतित भवेत प्रत्याख्याने च कृते सति बधैषा मरचिना स्यात् । सत्य ज्ञात्वाऽपि ग्रामणी स्वात्मज नैव गर्हयिष्यति । स खलु न

स्वीकरोति यदन्यजनानामपि काचन प्रतिष्ठा भवति। स तु सदैवोद्घोषयति यत् मत्पत्नी स्पर्शमात्रेणाऽन्यजान् पावनतामापादयन्ति।

चिन्तयित्वैवद् धौल्यो न किमप्युक्तवान्। ग्रामत्यागे को लाभो निरर्थकेन प्रश्नेन? अत एव मौनमाश्रितं तेन। परं विपत्तिस्तु न निरस्ता। ग्रामाध्यक्षस्य वचनं राजादेश इव समाकलनीयं। तदा किं स स्वात्मजां तत्रैव प्रेषयेत् यत्र खलु ग्रामाध्यक्षस्य पुत्रः तस्याः शीलं हर्तुं चेष्टिष्यते। न चेत् सा तत्र गच्छेत्, तदा ग्रामणी क्रोत्स्यति। तदा किं कुर्यात् वराकः सः? एवं चिन्तयता तेनाऽस्मनो भाग्यं बहु विनिन्दितम्।

किं निर्णीतं त्वया?" तस्य भार्याऽपृच्छत्। सा खलु बहुकालेन पश्चाद्भर्त्रा निरीक्ष्यमाणाऽऽसीत्। राधाऽपि तत्रैव स्थिता एकतः। स्थितेऽपि सौम्याभिः सा धर्मसंगोपितमुखयो कृते। तत्प्रतिकारस्तु मरणमेवाऽवधेय इव प्रतीयते स्म। न विद्यते रक्षाया प्रतिष्ठा सुरक्षा चेति निर्णीतं ताभ्याम्। राधा तु निर्भीकतया मात्रस्य स्वजीवनमेव धिक्चकार। तस्या एव कृते पितरौ विपद्ग्रस्तौ सञ्जातौ। अन्यथा तु न कदाप्यसौ ईदृशमनुभूतवन्तौ तावुभौ। विचिन्त्यैतत्, केवलं स्वानि भाग्यानि निनिन्द सा अपितु प्रस्तुतयाऽऽपदा सा भृशं विस्मयाञ्चकार।

'निर्णयस्तु मज्ञान।" बहुकालानन्तरं समुदीरयामास धौल्यः। 'अपमानापेक्षया तु मृत्युर्वरीया। अथवाऽद्यैव रात्रावेव त्यजेम ग्राममनम्। न कोऽपि ज्ञास्यत्यस्मान् तमिस्रावृतं निशीथे। युज्यते किमेतत्?" प्राऽस्तौत् स पलायनमेवम्।

परं कुत्र गन्तव्यमस्माभिः?" कलत्रेण पृष्टम्।

"कुत्राऽपि। त्वं सर्वस्मिन् वा विचारं नाऽर्हते। साम्प्रतं तु ग्रामस्य सुदूरं बहिर्गमनमेव चिन्तनीयम्। बहिरपि चेद् पुत्रोऽस्ति प्रस्तुतो भक्षयितुमस्मान्। तदा ईश्वर एव रक्षिता।" प्रकटितं भाग्यवादिनाद्धौल्येन।

× × × ×

कार्तिकस्य अर्धरात्रः। निस्तब्धतापि ग्रामो निद्राया अधीनो दृश्यते। यदा कदा शिशुविरहितस्य कुक्कुरस्य कुक्कुर स्ववशमेव नीरवतामखण्डयत्। कश्चित् मशकी तत्र आगमिति न वेति कथयितुं तु न पार्यते। अभ्रावृतोऽपि कश्चिज्जन तारकाणि गणयितुं प्रयत्ने न वेति निर्णेतुमपि न शक्यते। परमेतत् एकं स्पष्टं यत् कोऽप्यस्य नैषा निष्पक्षणम्।

धौंकलस्य समग्रापि गृहसामग्री लघौ यल्वेके प्रसेवे सकुली भूतमासीत्। प्रसेवश्च तस्य स्कन्धमाश्रयति स्म। भारश्चास्य नाऽबाधत तदीया गतिम्। सत्यमेव स अस्खलितया गत्या चलति स्म। तस्य भार्या पुत्री च तदनुसरणमकुरुताम्। परं गोजनहयोःतिक्रान्ते सति तेषां गतिः समवरुद्धा। न केवलमेको वृकः प्रत्युत त्रयो भयावहा वृका भुशुण्डिभिः सज्जिताः तत्र मार्गमवरुध्य तिष्ठन्ति स्म। दृष्ट्वैव तान् नरराक्षसान् राधा तदीया जननी च भृशमबिभीताम्। कः खलु त्रायेत तान् तावदिदं साम्प्रतम्। तत् स्थलं सर्वथैव जनशून्यमासीत्। निःशस्त्रा खलु ते वृकान् रोद्धुं कथं क्षमिष्यन्ते?

"किमिच्छसि भवन्त" साहसमिवाधृत्य प्रपृच्छ धौंकलः।

"जीवितुं चेदिच्छसि, तदा प्रतिनिवृत्य ग्रामाध्यक्षसमीपं नयास्मान्। मार्गे न किमपि वक्तव्यं त्वया। कोलाहले कृते सति यमालयमेव प्राप्स्यसीति जानीहि। तद्गृहस्य स्थितिरपि त्वया वर्णनीया। न काऽपि त्रुटिः स्यादस्या वर्णनायाम्। अन्यथा गोलिकैषा तव हृदयस्थलं मध्य एव भेत्स्यति।" वृकस्य कथनं सुस्पष्टं सन्देहातीतं चाऽऽसीत्।

धौंकलो विस्मित आसीत्। तदीयः परिवारोऽपि विगतभय इव प्रतीयते स्म। तैरनुमितं यदेते वृका ग्रामणीमेव ग्रसितुमभिलषन्ति। प्रतिनिवर्तनं त्ववश्यमेव विधातव्यं तैः सर्वैः। न कोऽपि विकल्प आसीत् तस्मिन् विषये। ग्रामं प्रतिनिवृत्ते सति यद् भविता तद् भविता। न पारयामासुस्ते किमपि प्रतिविधातुम्। विचिन्त्यैवं धौंकलः स्वपरिवारेण सह ग्रामाभिमुखः सन् प्रययौ। वृका खलु तानन्वसरन्।

धौंकलो निश्चिन्त इव मार्गमलङ्घत। राधा तज्जननी च तस्यानुसरणमकुरुताम्। परिवृत्तिं तु मर्त्यैव न कामयामासुस्ते सर्वे। को जानीते यत् परिवृत्तिरेषा वृकान् क्रोधयति। अत एव मौनमाश्रित्य ते मार्गं लङ्घयन्तेस्म।

ग्रामं प्राविशन् ते सर्वे। कुक्कुराणां बुक्कनं तैः सम्भावितम्, परं वृकैर्भीतास्ते स्वलाङ्गूलं पादयोर्मध्ये कृत्वा कुत्राऽपि विलीना इव बभूवुः। अतर्कितमेतद् धौंकलस्य कृते। कथमेतद्यत् कुक्कुरा न घोषयन्त्यपरिचिताः प्रवेशमस्मिन् ग्रामे? परं नाऽक्षमत स तन्निर्धारितुं।

"तत् खलु ग्रामाध्यक्षस्य गृहम्।" धौंकलेनैकस्या दिशि इङ्गितमिव कृतम्।

"कि वयं गच्छेम साम्प्रतं स्वगृहम्?" पुनः पृष्टवान् स, परं न किम-

प्युतरमासादितवान् । वीतचिन्तोऽपि स पुनरपि स भयग्रस्त समजायत । परिवृत्तिं कुर्यान्न वेति स चिन्तयामास ।

"अत्र तु न कोऽपि विद्यते ।" राधयोद्घोषितमेतत् श्रुत्वैतद् धौंकलोऽपि परिवृत्य तान् वृक्षानन्वेष्टुमियेष, परं सत्यमेव ते नाऽवर्तन्त तत्र । विमूढा इव ते इतस्ततो दृष्टिमक्षिपन्, परं न कोऽपि तेषां दृष्टिपथमायातः । वैफल्येनाऽनेन ते दिग्भ्रान्ता इव तत्रैवाऽतिष्ठन् । ततश्च स्वमस्तकं हस्तेनाऽऽस्फाल्य धौंकलो गृहं प्रति प्रचचाल । परिवारश्च तमनुससार । ततस्तु प्रभाता खलु रजनी ।

"किं कुर्याम वयं साम्प्रतम् ?" स्वपरिवारमप्राक्षीद् धौंकलः । क्रन्दनात् किञ्चिदेव हीनमासीत् तस्य वचनम् । नैराश्येण च पूर्णम् आक्रान्ताऽऽसीदाकृतिः तदीया । न स्थातुं न च गन्तुं शक्नुयुस्तदा किं कुर्युस्ते वराकाः । दौर्भाग्येन समुत्पीडितास्ते परिश्रान्तिवशाद् भूमावेवाऽस्वपन् ।

सूर्योदय सञ्जातः, तदनन्तरं च मध्याह्नः । परं न जाग्रतास्ते । अपराह्णे सञ्जाते काऽपि प्रतिवेशिनी राधाया जननीमाकारयामास । उत्तरमप्राप्य सा गृहान्तः प्रविवेश, ददर्श च सुषुप्तावस्थायां समग्रं परिवारम् । पोटलिकामपि पार्श्ववर्तिनीं दृष्टवती सा । दृष्ट्वैतत् खलु साध्वसं गता सा । ततश्च तया प्रातिवेशिका आकारिताः । क्षणाभ्यन्तर एव तत्र जनसम्मर्दः सञ्जातः । अनेन कश्चिद् व्याघात इव सञ्जनितः तस्य परिवारस्य निद्रायाम् । चक्षुषी समुन्मील्य तेऽपश्यन् सर्वान् खलु परितः स्थितान् । दृश्येनानेन समग्र एव परिवारः भयया समाक्रान्तः ।

किमद्य शयनमेव विधीयतेऽपराह्णं यावत् ? किमर्थं चैषा पोटलिका ? गमनं तु नेष्यते भवद्भिः कुत्रापि ? प्रश्नानां वर्षेव कृता पार्श्ववर्तिन्या तया ।

"न जिगमिषामः कुत्राऽपि ।" समुदीरितं धौंकलेन ।

'परमेषा पोटलिका तु स्वत्कथनं सर्वथैव खण्डयति ।" सा खलु तर्कबलेनाऽतर्जयत् संत्रस्तमिव गृहपतिम् ।

न किमप्यस्त्याहितमिति कृत्वा प्रातिवेशिकास्तु शनैः शनैः ततो बहिर्जग्मुः, परं सा प्रतिवेशिनी नाऽमुञ्चत तान् सर्वान् । इतस्ततो दृष्टिं निक्षिप्य तया ज्ञातं परिवारस्याऽशनम् । ततस्तु सा सत्वरमेव स्वगृहं गत्वाऽन्नपूर्णादिकमानिनाय ।

पर यदा मा पाकक्रियायै वह्निप्रज्वालयितुमारेभे तदा राधया समुत्थाय स्वयमेव पाककार्यं प्रारब्धम् । दृष्ट्वैतत् प्रतिवेशिनी दम्पत्योः पार्श्वे समुपाविशत् ।

"श्रुतं किं भवद्भ्यां यद् ग्रामाध्यक्षस्य पुत्रो व्यापादितः ?" भणितं तया ।

"किम् ? किम् ?" जाग्रताविव बभूवतुर्दम्पती ।

"अर्धबोधे काले केचन दस्यवो ग्रामाध्यक्षस्य गृहे बलात् प्राविशन्, शयानं च तस्य पुत्रं यष्टिकाप्रहारैरघ्नन् । अन्यांश्च न किमपि कथयित्वा गृहाद् बहिर्निर्गत्य कुत्रापि व्यलीयन्त । ततस्तु महान् खलु कोलाहलस्तत्र समजायत । कथं नाऽशृणुत यूयमेनम् ?"

"वयं तु गहननिद्राममसेवामहि । कमर्थं च बुभुक्षिताः खलु जागरणं विदध्यु ?" चातुर्यं प्रकटीचकार धौकलः ।

श्रुत्वैतत् न कोऽपि सदेहो जनिं लेभे प्रतिवेशिन्याः मनसि । सा तु पाककार्ये सम्पन्ने सति कार्यव्याजेन स्वगृहं प्रतस्थे । तस्या निर्गमनेन समग्रं परिवारं समुच्छ्वासमिव लेभे । आहारं समाप्य ते सुखमासत । स्थितिनिर्परिवर्तनमालक्ष्य च तैर्ग्रामपरित्यागस्य निर्णयः सर्वथैव त्यक्तः । न काऽपि बाधा पुनर्जनिष्यते, ईत्येव समचिन्तयन् ते ।

कतिपये दिवसा व्यतीताः खलु । न किमप्यसामान्यमजनि तत्र । परमेकदा आरक्षिणः समायपुस्तस्मिन् ग्रामे हत्यायाः सम्बन्धे । सर्वे ग्रामवासिनस्तैराहूताः पृष्टाश्च रहस्योद्घाटनाय । निहतस्य जीवनीमभिलक्ष्याऽपि केचन जनाः रहसि आकारिताः । आरक्षिभिः समाश्वासनमवाप्य ते खलु मृतस्य कलुषितं जीवनं साकल्येनोद्घाटयामासु । श्रुत्वैतदारक्षिणः स्तब्धा इव समजायन्त ।

"किं हत्यायाः पूर्वस्मिन् दिवसे किमपि कुचेष्टितमासीत् निहतेन तेन ?" जिज्ञासां कृतवान् कोऽप्यारक्षी ।

"तत्तु न जाने । परमेका युवतिस्तेनोत्पीडितेव सम्भाव्यते । यतो हि सा कार्यं मध्य एव परित्यज्य स्वगेहं गतवती । न च सा प्रत्यागता तत्र श्रमकार्याय ।" स्मृतं खलु केनाऽपि प्रेक्षकेण ।

ततश्च राधा समाहूता पृच्छार्थम् । आरक्षिवर्गं दृष्ट्वा तु सा भृशमवेपत ।

पितृभ्या निर्दिष्टा सा सत्यमुद्घाटयितु प्रस्तुता नाऽऽसीत् परमारक्षिणा चातुर्येण तर्जनेन च विवशेव सा समग्रमेव घटनाचक्र न शशाक गोप्तुम्। श्रुत्वैतत् आरक्षिणस्तेऽभिनवाया दिशि स्वकीयमन्वेषणमारेभु । पर न साफल्यमापुस्ते। राधाया कथन पितृभ्या सपुष्टमासीत् । अत एव न खलु तदविश्वसनीयमारक्षिणा कृते।

अधुनाऽपि हन्तृणामन्वेषण क्रियते पर तेषामभिधानमद्याप्य- विज्ञातमेव वर्तते। हताशा इव दृश्यन्ते समस्ता आरक्षिण । सपरिवर धौंकलोऽपि न जानात्य-द्यापि घातकाना नामानि न च स्मरति तेषामाकृतिविशेषम् । पर कृतोपकारस्त्वा-सीदेव स, यतो हि तैरेव विवशीकृत स परिवारेण सह स्वगेह प्रत्यागन्तुमक्षमत। आशास्तेऽधुना स —

' गुप्त रक्षेद्धि गुप्तता।"



मीदामिनी। अट्टहासमात्मस्य कुर्वन्नवोचम्— नातिदूरं तद्दिनं यदा मे विवाहः सम्पत्ता।

तेन किम् ? अस्मिन्नेव गृहे सम्पन्ना नैके विवाहोत्सवाः ? इत्युक्तं तेन।

यदि भवता अस्य गृहस्य परिष्कारः कार्यते तदा वरम्।
किम् ? परिष्कारेण गृहमिदं स्वर्गतां यास्यति ? ।

अतः विवादेनानेन सहैव विचार्याहमुपायायागतः।

अष्टौ दिनानि व्यतीतानि।। मम भाविन्या पत्न्या समीहितं वधमानं वासीत् यत् दयितमदनं समवलोक्य शीघ्रतया सम्पादनीयो विवाहः। इदानीं समेधितं मे दैन्यम्। कथमिव कृतार्थता मिथ्या स्वप्रशंसा ? 'सर्वसाधनसम्पन्नं भव्यं सदनं मे निवासः'। तत्र विराजन्ते नैके गवाक्षाः। वातायनं बहुलं परिलसितं शीत तापनिवारितं मे भवनं सर्वं सुखदं प्रियतरञ्चास्ते'। श्रुत्वा च प्रशंसां ममगृहस्य स्मेराननाभूत् भाविनी दयिता। गृहस्य चाभ्यन्तरितमेव परिज्ञानं यत् मया सह प्रणयसम्बन्धात् प्राक् आसीदसौ अन्यासक्ता। तेन सह तस्या विवाहोऽपि निश्चितः। युवकोऽसौ कस्मिंश्चिद कार्यालये कार्यं कुर्वाणोऽवर्तत। अनुपलब्धभवनतया कस्यचिन्मित्रस्य गृहे कृतवसतिरसौ निरन्तरमितस्ततो भाटकगृहान्वेषणपरायणोऽपि यदा न शशाक भवनमुपलब्धुं तदा तेन सह भग्नस्तस्याः प्रणयसम्बन्धः। सा प्रत्यनुरागार्द्रे समसकालमेव जिज्ञासितं तया यन्ममापि किमपि गृहमस्ति न वेति ? प्रश्नमिममुत्तरयता मया विहितो स्वभवनस्यातिरिक्तो भव्योऽस्वरूपः तस्याः प्रसन्नताः स्वाभाविकी।

ममगृहस्य स्थैर्यमिव मम प्रेयस्याः साहसमप्यपूर्वम्। एकस्मिन् दिनेऽकस्मात् समायाताऽसौ मदीयभवनम्। तस्मिन् समयेऽहं तत्र गृहे सद्यो जायमानस्य नवीनगर्तस्य मूषकान्वेषणं कुर्वन्नासम्। इह तस्या अतर्कितागमनं जातं मे कारतालीयन्यायसंयोजकम्। उक्तं तया अस्मिन्नेव गृहे निवससि ? श्रुत्वा चैमं प्रश्नं मद्यमस्ज्ञानस्वेदबिन्दवोऽजायन्त कुर्मदीयं शरीरम्। जिह्वा मे शुष्कतामगात्। गिरश्च स्खलिताः। उत्तरणीयं किमपीति विचार्य स्खलद्गिरा मयोक्तम्— नोपलभ्यते कुत्रापि समीचीनं भवनम्। यद्युपलभ्यतेऽपि किमप्यन्यद् गृहं चेत् तद्दिनोऽपि भ्रष्टम्। स्याद्यदि कथञ्चित् परिष्कारोऽस्य तदेदमेव भवनमनुपमं स्यात्। श्रुत्वा चैतन्नोक्तं तया किमपि। परं तस्या मनसि सञ्जातं उत्कायातं इत्यनुभूतं मया। सा यावदवतरति मध्येकक्षं तावदेकः स्थूलो मूषको प्रधावन् समागतः पादयोः प्रणिपातमिवाचरन् स्पृष्ट्वा मदीयौ पादौ अपसारयितश्च। सा चोच्चैः शङ्कायमाना

कम्पमाना च वचः कथमप्यवदत्। मया विहस्योक्तम् इमे मूषका एवैष्यन्ती मे सहचरा। तव गृहे ईदृशा स्थूला सन्त्याखव? एवमुक्त्वा यावत्तया निहितो हस्तो भित्तौ तावत् भित्तेरेव स्थूलास्तरस्तत पृथक् भूत्वा भूमौ पतित अयञ्चापरो विस्फोटो मम सरसजीवनस्य कृते।

तत्रैव वैपरीत्य पश्यामि यथा चित्रित गृहस्वरूप त्वयैवावोचन् मा। लज्जया दीनतया व्यग्रतया च सहैवागतो ह दीर्घकालिक मौनव्रत सपद्यायावोचम्— मा भैषी प्रिये? विवाहात् पूर्वमेव परिष्कृतमिद भवन मनोज्ञनिवासकल्पमवलोकयिष्यसि। सर्वसाधनसम्पन्ननिश्छिद्रकेऽत्र भवने मूषकाना प्रेतामानोऽपि नावलोकयिष्यन्ते वा खलु कथा वराकानामाखूनाम्। श्रुत्वा मदीय वचः किमपि हृदयमनुभूय भृश विस्मायितमिति व्याहृत्य तडिदिवापगता सा।

गृहस्वामिने मायापतरिच्छा परिवर्तयितु सर्वो मे प्रयासो विफल। एकदा तु भृशङ्गागेयस्य सद्गृहात् बहिः कारित। फलस्वरूप कतिपयदिवसव्यापिनी खञ्जता मामितरामपडत्।

एकस्मिन् दिने तस्य कन्या सौदामिनी प्रसन्नवदना लघु लघु गच्छन्ती मध्येमार्गं सम्मिलिता। प्रगल्भ प्रश्न तत्राकारण पृष्टा सा अकथयत् यत्स विवाह शीघ्र मेव सम्पत्स्यमानो वर्तते। वरश्च ममाभिरुचित। मया च तस्य युवकस्य नाम सङ्केतादिक सर्व तत परिज्ञातम्। साम्प्रत मे मनसि प्रतिशोधभावना। सौदामिन्या भाविन पत्यु सकाश लिखितानि मया पत्राणि यत् यो विवाहस्तदयासम्भवीकृत तस्य फलमपि भाग्यतरेण भाव्यम्। तव श्वशुरो यथा नाम तथा गुणैरोऽस्ति। सौभाग्य तु तस्य पराकाष्ठैव सास्ते। सर्वाणि च तस्य गृहाणि भाटकरूपेण दत्तानि वर्तन्ते। ये च भाटकदातारो यत्र कुत्रापि तस्य गृहेषु निवसन्ति, तैः सार्ध तस्य दैनंदिन कलह। एवमपि श्रूयते यदसौ सर्वाणि विशीर्य तव शिरसि स्थापयति अहमस्मि तस्यैव शुभेच्छु। पत्राणि विलिख्य नून मत्र यास्यति स्वचन पलायनं कार इति स्वस्थमना अहमतिष्ठम्।

इतो मम प्रेयस्या सह मे सम्मेलन पत्रपर्यन्त मेवावशिष्टम्। अन्तिम पत्रे मयालिखित यत् मद्रूपोपरि, मम मारकभवनोपरि च त्वया ध्यान न देयम्। किन्तु ध्यान तु त्वया केवल मन्मायैव देयम्। कृपा विधेया मयि। देवन्द्र, देवेन्द्र, यथा वधा परिणयो निर्विघ्नं सम्पद्येत। एतेन ज्योतिर्विदा कथित यत् मम ग्रहाः शनैः शनैरनुकूलतामुपयान्ति। किञ्चित् कालानन्तर द्विभूमे प्रासादे मेलापो निश्चित।

पञ्चदशदिनान्यतीतानि । मम गृहस्वामिनो गृहे आसीत् महान् जनसम्मर्दः । मया विचारितं-स्यादेतत् कौतुकं मम पत्राणाम् । परं ममानुचिन्तनं वैपरीत्यमुपगतम् आसीत् सा तत्परता सौदामिन्या विवाहस्य । अहमस्मिन्नेव तर्कवितर्के यावदवर्तं तावत् पत्रवाहकः पत्रमेकं प्रायच्छन्मे हस्ते । पत्रमासीत् मम प्रेयस्याः । किमत्र लिखितं स्यादिति शङ्कमानहृदयः पत्रं पर्यपठम् । तत्रलिखितमासीत्-- तव भाटकभवनदर्शनानन्तरं त्वया सह वैवाहिको विचारः सर्वथैव त्यक्तः । क्षम्यताम् । श्रुत्वा पत्रमहं भूमौ न्यपीपतम् ।



# पङ्गुः

श्रीमती मञ्जु शर्मा एम ए

चिकित्सालयस्यैक कक्ष । तदीय कस्मिंश्चित् भागे काऽप्येका शय्या । तामधिशेते कश्चिदातुर । न कोऽपि वर्तते तत्पार्श्वे । अद्यैवाऽनीत स शल्यचिकित्सार्थं । दूरस्था तत्सम्बन्धिन । श्व परश्वो वा समागच्छेयुस्ते । साम्प्रत तु स एकान्तमेव भजते । बहुकालतस्तदीया दृष्टि पाददिशि प्रसरति । नयनकोणात् प्रवहन्त्यश्रूणि यानि स न शिक्षते रोद्धुम् । नैव च स प्रयतते तानि प्रमार्ष्टुम् ।

अद्य प्रात किमप्यचिन्तयत स । स्वानि भाग्यानि निर्णेतु दृढ प्रतिज्ञातमासीत् तेन । निर्णयस्तु सजात । पर सर्वथाऽनपेक्षित खलु । नाऽजानात् स यत्तदीया प्रणयिनी न तोक्ष्यति तमधिकृत्य । कियन्तमनुरोध कुर्यात् वराक स । पर सा नाऽतुष्यत् ।

"लक्ष्मि ! किं त्वया कोऽप्यन्योऽनुकम्पनीय नरयो ना ?

पृष्टमासीत् तेन ।

"न कोऽपि ।" सहजभावेन समुदीरित तया । नासीत् प्रवञ्चनालेशोऽपि वचसि तस्या ।

"ततो मा परिऐतु कथ न समुद्वहसे ?"

"कारणानि तु नैव विद्यन्ते । पर मम बान्धवैरेष उद्वाहो नैवाऽनुमन्यते । अत प्रतीक्षणीयमस्माभ्याम् ।"

'कीदृशी प्रतीक्षा ? द्वौ वर्षौ तु समतीतावस्या प्रतीक्षायाम् न साम्प्रतमति परिवर्तन सदृश्यते तेषा विचार-सरण्याम् ।"

"किं करवाणि तावदहम् ? यथा मया, तथा त्वयाऽपि प्रतीक्षैव करणीया ? कियत्काल यावत् ते मामनूढामेव द्रक्ष्यन्ति ?"

"किमपि ब्रूयुस्ते । न चिन्तयामि तत सर्वथैव । अन्यच्च न जनैन्द्रीरित किमपि वच स्पृशति मृत जनम् । अत त्यजैत प्रश्नम् ।" तस्य कथने कोऽपि निश्चय आभासते स्म ।

"पर मत्कृते तु चिन्तय तावत" पीडितेवाऽदृश्यत सा ।

"तत्खलु त्वयैव चिन्तनीयम् ।"

तदनन्तर न किमपि निगदित लक्ष्म्या । क्षण यावत् प्रतीक्ष्य उत्तस्थौ स । तदाऽपि सा मूकत्व नाऽत्यजत् । न च निरुद्धस्तया निष्क्रमणत प्रियस्य मार्ग । अश्रूणि तु सतत प्रवहन्ति स्म तस्या नयनाभ्याम् ।

निरादृतमात्मानमनुभूय स शोकाकुल इव समजायत । बहिरागत्य द्विचक्रिकामारुह्य च वाष्पयानमार्ग प्रतिप्राऽचलत् स । दृष्ट्वा तु तस्य गतिविस्म्ब सन तदीयोद्भ्रान्तता समुद्घाटितेवासीत् । मार्गे च नैवोपलक्षितास्तेन नमस्कार कुर्वन्तो जना । आत्मघातनाय कृतसकल्प स विचार शून्य इव भाति स्म ।

शनै शनैर्द्विचक्रिका प्रचालयन् स समग्रमेव नगर समुल्लङ्घयामास । ततश्च स एतादृशे स्थले आजगाम यत्र लोहमार्ग किञ्चिन् परिभ्रमति । तत् स्थल सर्वथा निर्जनमासीत् । वर्जनार्थ न कोऽप्यवर्तत तत्र । तदीयो विवेकस्तु पूर्वमेव तत्याज तम् ।

इतस्ततो दृष्टिपात विधाय स द्विचक्रिकामेकत पर्यत्यजत् । ततश्च स शनै शनैर्दृढतर पद यामैर्लोहमार्गस्यान्तिके समागत्य अवातिष्ठत । अधुना वाष्पयानस्य न क्वाऽपि ध्वनिस्तत्राऽश्रूयत पर तत्प्रचलनजनित किमपि प्रकम्पन तु स्पष्टमेवानुभूयते स्म । तदनुसार नाऽधिको विलम्ब आसीत् तदागमने । प्रतीक्षमाण किं कुर्यादिति विचिन्तयन्नेव स चोलस्य कोषाद् रिक्तमेक पत्र लेखनी च सगृह्यैतल्लिलेख —

"एतदात्मघातकृते न कोऽप्यन्य उत्तरदायी । जीवनात् सर्वथा निराशोऽह स्वेच्छया प्राणान् त्यजामि । एतच्च सर्वथा सज्ञ एव लिखामि । सुरेश "

तत्पत्र चोलस्य कोषे विन्यस्य स एकत स्थित्वा एकाग्रतया वाष्पयानागमन प्रतीक्षयामास । किञ्चित्कालानन्तर धरा–प्रकम्पन बुबुधे । साचन ध्वनिश्च मुखरतामादधौ । श्रुत्वाऽप्येतत् सर्व स स्वस्थानात् परिचचाल । बिभीषिकया आक्रान्तोऽपि नाऽदृश्यत स । स्पष्टमेव स मृत्योरङ्गीकाराय प्रस्तुत आसीत् ।

साम्प्रत यानागमन निरन्तरमाभाति स्म । धराप्रकम्पनेनैको भयावहो विराव तत्र कर्णास्फोटनमिव सजनयति स्म । पर सुरेशस्य मुखमुद्रया न प्रतीयते स्मैकाऽपि विरोधिता तद् विचार वीथौ । तेन प्रक्षिप्ता स्वीया दृष्टिर्यानागमनदिशि । विज्ञाय च तदागमनक्षण स सत्वरमेव लोहमार्गं शय्यामिव विधाय तदुपरि स्वदेहमतनिष्ट । भयविमुक्तश्च स निमीलयामास स्वनेत्रे । एव स्थिरेन तेन शवसाम्यमिवादधौ ।

मार्गपरिभ्रममालक्ष्य वाहकेन पौन पुन्येन शीघ्र ध्वनिरुत्पादिता । न सम्प्रधारित पूर्वतस्तेन यत् कोऽपि मुमूर्षुर्जनस्तत्र वाष्पयानस्य मार्गे शलाकयोरुपरि शेते पर क्षणाभ्यन्तर एव स निभालयामास व्यक्तिमेका तत्स्थिता । तत्क्षणमेव स यानगति मृशमरौत्सीत् पर वेगबाहुल्यवशादकस्मात् तदवरोधोऽशक्य आसीत् ।

तदैव आ' इत्युच्चैराक्रन्दनमश्रूयत । दुर्घटना तु नैव निवारितेति सम्प्रधार्य वाहकेन यानस्य गति सर्वथैवाऽवरुद्धा । ततश्च सद्य एव स नीचैरवततार । केचन यात्रिणोऽप्यौत्सुक्यवशाद् निजासनानि परित्यज्य दुर्घटनास्थले आजग्मु । दृष्ट च तै सर्वैर्दुर्घटनास्थल रक्तेनाऽऽप्लावितम् ।

सुरेशस्तु ससज्ञ एवासीत् । पर यानाग्रभागस्य तीव्रेण प्रहारेण तदीयावुभावपि पादौ छिन्नावास्ताम् । छिन्नस्थलाभ्यामसृक् प्रवहति स्म सातत्येन । वेदनया समाक्रान्तोऽपि सुरेशो मन्द मन्द मवाक्रन्दत् । तदैव यानस्य रक्षिता तत्राऽऽजगाम । तेन प्राथमिकोपचारपेटिकाऽपि सहैवानीता । पर दुर्घटनाया गाम्भीर्य दृष्ट्वा नैवोद्घाटिता सा पेटिका तेन । छिन्नस्थलयोरावेष्टन त्ववश्यमेव कृतवान् स प्रभूताभिर्वस्त्रपट्टिकाभि ।

'सत्वरमानयैन शकटकाऽभ्यन्तरे । त्वरस्व च वाष्पयानम् । यानस्तम्भस्थले कोऽपि चिकित्सक उपलभ्य' । तदधीनैवास्य समुचिता चिकित्सा । इति निर्दिदेश यानवाहक स ।

चिकित्सकेनाऽपि स्थितिगाम्भीर्य सद्य एवाकलितम् । सत्वरमेव स मुख्यचिकित्सालय नियतमातुरम् । एतदभ्यन्तरेऽजस्र रक्तप्रवाहेण सुरेशो निस्त्राणतामाप । ससज्ञामवाप्य तु स आत्मान तस्मिन् कक्षे त्राणस्थायां शय्याया प्रनम्यमानमवैक्षत । प्राणान्तस्तु न बभूव ' इत्यवधार्य स भृशमव्यथत् । स्थानि भाग्यान्यपि वञ्चनो मर्हयत स । तेन तु मृत्युर्नु ताऽऽत्मीत् पर मृत्युसममभिशप्तमिव जन नावृणोत् ।

अधुना किं कुर्यात् वराकः सः ? कथमेषा दुर्घटना व्याख्येया सुहृज्जनानां बान्धवानां च समक्षम् ? लक्ष्मीश्च । नहि, नहि, तस्यास्तु स्मृतिरपि घातमस्तुदा । अधुना तु तस्याः कथैव समाप्तिमगमत् ।

एवं चिन्तयतः सुरेशस्य समवधानं कर्णजपस्य ध्वनिना आकृष्टम् । अक्षिणी समुन्मील्य स तद्दिशि दृष्टिं चिक्षेप । तदीया ससंज्ञता विज्ञायैक आरक्षिजनस्तदन्तिकमागच्छत् ।

"ससंज्ञोऽसि किम् ?" तेन पृष्टम् ।

"आम् ।"

"किमभिधानं भवतः ?"

"सुरेशः ।"

"कस्मिन् विभागे व्यापृतोऽसि ?"

"  विभागे राजपत्रितं मम पदम् ।"

"ब्रूहि तावत् किमर्थमेष आत्मघातस्य प्रयासः ?"

आरक्षिणः स्वरे किमपि मार्दवमागतम् ।

"जिजीविषा मां परित्यक्तवती, इत्येव जानीहि ।"

"न जानासि किं दण्डनीयोऽसि प्रयासायैतादृशे ।"

"नाऽविज्ञातमेतत् परं नाऽज्ञानाऽस्माद् यदेषः प्रयासः विफलतामेष्यति । साम्प्रतं तवाधीनोऽस्मि । यदिच्छसि तत् कुरु । प्रयतस्व तावद्मदर्थं प्राणदण्डाय । अधुना तु मृत्युरेव समधिकं काम्या ।"

"सुरेशस्य मनःस्थितिमनुमीय नाधिकं पृष्टं तेनाऽऽरक्षिणा । पुनरागमिष्यामि" इति कथयित्वा वजनो बहिर्गतः सः । सुरेशश्च पुनरेकान्तमेव सिषेवे । समग्रं जीवनं पङ्गुभावेनैव यापनीयमिति विचिन्त्य स दारुणं दशमनुबभूव । जीवनं तु सर्वथैव पराश्रितं भविष्यति, दयनीयता चाऽवहिष्यति । एतया विचारणया स भृशमशोचत । आजीविकाऽपि गतेव प्रतीयते । मित्राणि किमर्थमागमिष्यन्ति ? बान्धवास्तु सत्वरमेव परित्यक्षन्ति माम् । तदा किं भिक्षावृत्तिराचरणीया ? अन्तिमेनानेन चिन्तनेन स न केवलं मनसा, अपि तु देहेनापि कम्पननृत्यमिव समाचरत् ।

आतुरालये निवसता तेन त्रयो मासा यापिताः । अस्मिन्नवधौ प्रायः

सर्वे बान्धवाः सुहृदश्च तं दृष्टुं समाययुस्तत्र । वार्द्धक्येन जर्जरीभूतौ पितरावपि पुत्रस्नेहेनागच्छताम् । सुतस्य छिन्नौ पादौ दृष्ट्वा तु तौ मूर्च्छिताविव सञ्जातौ । परं किं कुर्यातां तौ वराकौ । बहूशः प्रवाहितानि ताभ्यामश्रूणि । दिवसद्वयानन्तरं च पुनः स्वभाग्यायत्तं परित्यज्य स्वनिलयं परावर्तितावुभावपि तौ ।

सुरेशोऽपि पित्रोर्वेदनां सोढुं न पारयामास । तयोः समक्षं स आत्मनो मौढ्यं स्वीचकार । वृद्धावस्थायां तयोः सेवार्थं न कोऽप्यविद्यत साम्प्रतमिति परितापेनाऽपि स भृशं प्रपीडितः । आत्मघातार्थं विहितस्य प्रयासस्य वास्तविकं कारणं तु तेन नैवोद्घाटितं तयोः पुरतः । एतादृशे प्रसङ्गे समुत्पन्ने सति भृशमतप्यत सः । सत्यमेव तस्याः स्मरणमात्रेण स क्रन्दितुमैच्छत् । यस्याः कृते स प्राणानपि तृणमिवाऽमन्यत सा खल्वेकवारमपि तत्सन्निधौ नागतवती । सम्भवं किं यदेतां दुर्घटनां नाऽशृणोत् सा ? श्रवणानन्तरमपि या न समागच्छेत्, सा किं प्रेम्णोऽधिकारिणी ? किं तस्याः कृते प्राणान्तविधातुमैच्छत् सः ?

सुरेशस्त्वेतैः प्रश्नैर्वारम्वारं व्यथते स्म । निद्राऽपि पलायितेव । तदभावेऽन्नान्यपि बहुशोऽशुष्यन् । कृशत्वं गतस्तदीयो देहः सततमवेपत । परं स चिन्तितो नासीद् स्मिन् विषये । देहविषयको मोहस्तु पूर्वमेव तत्याज तन्मनः किमवशिष्टमस्मिन् जीवने यत्कृते स देहममं रक्ष्यात् ? अस्यां दुरवस्थायां तु देहत्यागः वरीय इत्यचिन्तयत् सः ।

श्वः चिकित्सालयान्मुक्तिर्भविष्यति इति विचिन्त्य सुरेशः स्वकार्यक्रमं चिन्तयति स्म । सुहृदा प्रयत्नैः रात्रपातविषये न कोऽप्यभियोगः प्रस्तुतीकृतः आरक्षिभिरिति कृत्वा स स्वकीयं पदं पुनर्ग्रहीतुं सक्षम आसीत् । गमनागमने किञ्चिदसौकर्यं भविता, परं तत्खलु कयमप्यतिक्रमणीयम्, इति विचिन्त्य स समाश्वस्त इव बभूव ।

अधुना स चिकित्सकस्यागमनं प्रतीक्षते स्म । कार्यभारं पुनर्ग्रहीतुं सक्षम इत्यस्यैतत् प्रमाणपत्रं तु चिकित्सक एव प्रदास्यति । तदवाप्त्यनन्तरं स वाहनमानेतुं प्रार्थयिष्यति कमपि सेवकम् । गृहं गत्वा च यथाकथञ्चिज्जीवनं तु यापनीयमेवेति निर्धारितं तेन ।

चिकित्सकः शनैः शनैरागच्छति स्म दृष्टिपथि । परमेकाकी नाऽसीत् सः । काचन युवतिरपि तमन्वसरत् । प्रात्यया गत्या च लक्ष्मीरिवाऽभाति स्म । आम्, लक्ष्मीरेवाऽऽसीत् । ज्ञातवैतत् स पार्श्वपरिवर्तनं कृतवान् । तां द्रष्टुमुत्सुको न सः ।

"पश्य सुरेशमहाशय ! का आयताऽऽयामानितुम् ?" चिकित्सक उवाच ।

"न शृणोषि किम् ? जाग्रतोऽसि न वा ?" पुनः पप्रच्छ स ।

"न स्वपिमि ।" शनैरुक्तवान् स ।

"शृणु तावत् । गृहगमनायाऽनुमतोऽसि त्वं मया । कार्यभारं पुनर्ग्रहीतुं सक्षमोऽसीति प्रमाणपत्रमपि गृहाण । एषा लक्ष्मीश्च त्वां कस्मिंश्चिद् वाहने गृहं नेष्यति । शुभास्ते पन्थानः सन्तु ।" ईरयित्वैतत् चिकित्सकस्तु प्रचलितः ।

'शृणुत महाभागा ।' आकारयामास सुरेशः ।

'किं वक्तुकामोऽसि ?' पुनरागत्य चिकित्सकेन पृष्टम् ।

"एतया सह न जिगमिषामि ।" आरोषमिव प्रकटीचकार सः ।

"किमर्थमेषा आपत्तिः ? या खलु मासत्रयं यावत् प्रतिदिनमत्र समाजगाम त्वत्स्वास्थ्यसूचनामधिगन्तुम्, या च त्वयि सुप्ते सति त्वच्छय्याप्रान्तं स्वेच्छया न तत्याज, सैव त्वया तिरस्करणीया ? धन्योऽसि त्वम् । न प्रत्यक्षीकृतैतादृशी कृतघ्नता पूर्वं मया । बाढम्, कुरु यदीप्सितम् ।"

निर्भर्त्स्यं तमेव चिकित्सकस्तु निष्क्रान्तः तस्मात् कक्षात् ।

सुरेशः पार्श्वपरिवर्तनं विधाय लक्ष्मीं प्रत्यभिज्ञातुमिवारेभे । सा तु मूकभावेनाश्रूणि विमुञ्चति स्म । दृष्ट्वैतत् सुरेशस्य समग्रोऽप्याक्रोशः सर्वथैव विगलितः । अश्रु विनिर्गते च तज्जाते तदक्षिणी ।

"अत्राऽऽगच्छ लक्ष्मि !" स्वरं मार्दवमिवाऽऽनीय प्रावोचत् सः ।

"... ..."

"नैवागमिष्यसि किम् ?"

"क्षम्यतां मां सुरेश !" नयनेनाननं मार्जयन्ती सा तत्पार्श्वं समागच्छत् ।

तदनन्तरं च तया स्वमस्तकं तदीयोरःस्थले विन्यस्तम् । सगद्गदं रुदनमेव कृतवती सा बहुकालं यावत् । सुरेशस्तु मौनमाश्रित्य तस्या मस्तकं स्वहस्ताभ्यामालिलिङ्ग ।

"आयाहि, गृहमयाव ।" कथमपि विमुच्यात्मानं तदीयात् परिरम्भणाज्जगाद सा । तमन्वैव सेवकमुपलभ्यमानं प्रार्थयामास सा । उपलभ्य चानीत

सति तदुपरि सुरेशं समुपस्थाप्य सर्वेते चिकित्सालयस्य द्वारभागे समाययुः । वहित्रमेकं पूर्वतोऽ विद्यत तत्र । तमारुह्य सुरेशस्याऽऽवासं प्रति प्रातिष्ठेतामुभौ तौ ।

यदा सुरेशः स्वगृहाऽभ्यन्तरे प्राविशत्, तदा स विस्मित इवाऽजायत । समग्रं गृहं स्वच्छं सुसज्जितं चासीत् । बहुमूल्यानि कानिचिदभिनवानि वस्तून्यप्य-विद्यन्त तत्र । एतद्दृष्ट्वा स्तम्भ इव सञ्जाता तस्य वाक् । स तु स्वगृहं धूलिधूसरि-तमनुमीय लक्ष्मीं नाऽन्वेष्टुमैच्छत् तदन्त । परमेतत्त्वतर्कितमेव सदृश्यते स्म ।

'किमेतत् ?'' विस्मयं प्रकटीचकार सुरेशः ।

'नहि किमपि । नवदम्पत्योरावासयोग्यं तु विधेयमेव गृहम् ।''

''नवदम्पत्यो ! किमावयोरुद्वाहः सम्पन्न ?'' वराकः स अप्रतिभ इवासीत्

''मया वृतोऽसि पतिरूपेण त्वम् । सन्ध्याकाले मम पितरौ पुरोहितादिना सह समागन्तारौ । तदैव प्रदेयाऽस्मि ताभ्याम् ।''

एतदुक्त्वा सा नवोढेव सलज्जता दधौ । सुरेशश्च केनाऽप्यनिर्वचनीयेन प्रहर्षेणाऽऽक्रान्त सन् न किमपि वक्तुं पारयामास । स तु निर्निमेषदृष्ट्या प्रियत-मामुखमेव प्रेक्षते स्म ।



स्वामिन्' । देशस्य सर्वथा सशक्ता कर्णधारा । तं सार्कविरोध कर्त्तुं न पार्यते, किन्तु तेषां प्रसारणा कर्त्तुं शक्यत । तेषां समकालिकसरित्प्रवाह इवा,यन्ति यन्ति च । तत्र निमज्जन नौद्विकरम् । उन्मज्जनमेववरम् । विद्यालयभवनस्य,गोचरभूमे', कूप-जीर्णोद्धारस्य, पचायतनसदनस्य कृते आर्थिकसहायता त एव ददति । तान्देवाना-प्रियान् विहायप्रवञ्चन कृष्णचन्द्रस्यैवकार्यमास्ते । यदि भवन्त साहाय्यमाचरिष्यन्ति, तदा तेषामत्र चरणाधानमेव नो सम्पत्स्यते । द्विदलञ्चलोपक्ष्यते । अस्पृश्यास्तु अस्पृश्या एवोत्पन्ना तथैवाजन्म भविष्यन्ति । अस्माकं स्वधर्म' प्राणप्रिय' । त केनापि मूल्येन विक्रेतुं नाभिलषाम । शास्त्रपुराणानामाज्ञा शिरोधार्यास्ति । तेषामुद्धार कदापि नाचरिष्याम । प्रतिज्ञाम्तुकर्त्तुमेव भवन्ति । तथैवनियन्ते । कर्त्तुं तदेव भविष्यति यद्वयमभिलषाम । इमेवराका विश्वसन्ति यत्समाजसुधारो भवति । अयम् कर्पलाश्वो यावन्नागच्छति, सदाप्रेषिष्यिष्यति ।"

कृष्णचन्द्रस्यस्पष्टीकरणेन सर्वेप्रमोदमापु । तस्य प्रत्युत्पन्नमतित्व च प्रशमन्ति स्म । वृद्धैर्नेतर्लोहमन्यन्त । इमे चत्वार पुरुषा एव ग्रामस्यप्रधानपुरुषा अभवन् । तेषामेव करणेन ग्रामस्य सर्व कार्यप्रचलति । ते प्रत्यजानन् । वयन्कापि-धर्मविरुद्ध कार्यनाचरिष्याम । इत्थ तदेव पलाशस्य पत्रत्रयमवस्थितम् ।

कृष्णचन्द्र स्वकीयमेकाकिन पुत्र दयाराम पाठयितु काममिन्यूनता नौवि-हितवान । यत्किमपि पञ्चायतनकर्मणि बकवृत्योपार्जित तत्सर्वं तदध्ययने विनियो-जितम् । हस्तलाघवक्रियायामासीत्सपटुतम । आय पूर्ण आसीत् दयारामस्य विद्याभ्याम पूर्णतामगतोऽभवत् । तेन समाजशास्त्रे स्नातकोत्तर प्रमाणपत्रमासादितम् । तस्य विचारै परमोग्रनासीत् । स पितु विरुद्धमेव विचारमरक्षत तत्र समाजवादि विचारधारायां गभीर रग' आरूढ । मत्रविषये पाश्चात्यविदुषा विचारमपि स आत्मसात् कृतवानासीत् तद विषये शोध प्रबन्ध विधाय "विद्यावाचस्पति" विद्या-मुपाधिमासादितवान् । कृष्णचन्द्रस्यमहती चाशासीत् यद्राजकीयसेवामुरीकृत्य मम वार्धक्यस्यावलम्बन भविष्यति । तेन तदर्थं देवतादेव्योपि मानिता व्रत माचरितम् । परमानवानां सर्वां मन कामना वुत पूर्यन्ते ।

दयाराम सत्यसमाजसेवको भूत्वा पितृकृतस्य पापस्य प्रायश्चित्त कर्त्तुं मिच्छति । नगरेस्थित स समाजसुधारदिशि पूर्णरूपेण प्रसिद्ध जात, किन्तु ग्रामीणा तत्स्वरूप नाजानन् । कृष्णचन्द्रस्यापि ज्ञान नासीत् यत्तदाशायाः एकमात्र केन्द्रीभूतोदयाराम तस्मिन् दया नो करिष्यते ।

मेघसिंहोदलितवर्गस्य महामन्त्री आसीत्। तस्मिन् समयसमाजसेवाया संलग्नतासीत्। स प्रमेश्वरमन्तरि कृष्णचन्द्रवत् प्रदर्शनं नेच्छति। अस्पृश्य आसीद्, स्वमस्पृश्यवर्गममन्यत। परिगणितजनजातयस्तं प्राणाधिकममन्यन्त। स स्वसमाज-लीनामस्थित रात्रौ भजनमगायत। दुराचरणदुर्व्यसन त्यागायोपदेशमददात। तस्य प्रयासस्य फलमिदं जातम्, यत् मेघवंशीया मघवाना मृतपशुमांस भवतु तत्यजु। सुरापानमपि शनैः शनैः पर्यहरन्। स्वच्छतामपि यथाशक्ति परिगृहीतवन्त। मेघसिंहस्यैव दृष्टान्त नम्र चरितमास्ते। बालिकापाठशालायामधीयते। प्रौढशिक्षा ग्रहणा-योत्सुका जाता। शिक्षा तेषां जीवनस्याभिन्नमङ्गमजनि। ते स्वकीयश्रमदानेन रात्रिविद्यालयस्यभवन निर्मितवन्त। यो ग्राम कदापि अस्वच्छताया पद व्याधीना-मास्पद चाभवत् स एवाद्य स्वच्छताद्यान परिशोभते। इदमवमेघसिंहस्य संघटनस्य फलमासीत।

ग्रामस्यदक्षिणतोऽस्पृश्याना वसतिरस्ति। कदद्दद्दाणि नटआनि च लिम्पितानि शोभमानानि दृश्यन्ते। तेषामाकृति कीटगृहमिवपरन्तत्र जीविता प्राणिनोऽत्रसन्ति। कचवरस्यनामापि नासीत्। मृतपशूनामस्थिना कृते ग्रामाद्दूरेनियत स्थानम् सुरक्षितम्। तेषां चर्माणि टङ्कन्तितु पृथक्स्थानमास्ते। सम्प्रतिदुर्गन्धिभि ग्रामस्यवातावरण दूषित नो जायते। ग्रामस्यमध्य रामदेवस्य स्वच्छमन्दिर विराजते। पूजारी त पूजयति। आगतभ्योभक्तेभ्या वितरति प्रसादम्। यत ते प्रसीदन्ति। बालकाना सम्मर्दं तत्र सदैव तिष्ठति। पूजारी अस्पृश्यजातीयोऽस्ति। स साक्षरोऽस्ति। यथावसरबालकानध्यापयति। मन्दिरे प्रेरणाप्रदानि चित्राणि लम्बमानानि सन्ति। यानि दृष्ट्वा जीवनविषये सदाशापरिगृह्यते। मेघसिंहस्य स्वप्न साकार परिलक्ष्यते।

ग्रामेतस्मिन्नेक एव कूपो राजकीयो विभाति। सर्वे ग्राम्या तस्मादेव जीवन लभन्ते। स्वपशूनपि जलपाययन्ति। जलादानविषये यदाकदा संघर्षस्थिति-र्जायते। परमेघसिंहस्य कारणात् कदाप्यप्रियघटना नाजनिष्ट। असवर्णाश्चिन्तयन् मेघसिंहस्याज्ञा भवेत्तर्हि वय सर्वे कूपमास्थाय जलमादातु प्रभवाम। परन्तु मेघसिंह सत्याहिंसयो पुजारी अस्ति। हिंसाया विश्वास नो करोति। अत स्वजनान् संघर्षात् सदा दूरे स्थापयति। नवयुवकेषु सर्वे पुनराहु, परन्तु विचारशीलता न भवति।

एकदिने युद्धस्य वातावरण जातम्। संघर्षस्थितिरागता। तदैव मेघसिंह आगत्य संघर्षमशामयत्।

कृष्णचन्द्रस्य निज कुलीनतिजनाया अभिमानमासीत्। स पन्वचनमेव सफलता मन्यते स्म। समाजसुधारस्य नाम्ना विपुलधन शासनाद्गृह्यते। चतुर्णाम् सहयोगेन तदात्मसात्करोति। तद्विपरीत वक्तु कस्य क्षमता? यदा मेघसिंहो विरोधमाचरति, तदा तस्य कारणस्य गुप्तपत्रं प्रेष्यते। परं सत्याग्रही कस्माद्-बिभेति? मेघसिंहः स्वसिद्धान्ते दृढमान आसीत्। येन कृष्णचन्द्र स्वापमान निश्चिनोति। विरुध्यास्पृश्यानां कृते जलनिषेधाय तडागोऽजायत। यदा पापस्य घट पूर्यते, तदा स्वयमेव स मेघसिंहं पराजेतुमियेष। ग्रामस्य सर्वे सवर्णा तत्पक्षपातिन आसन्। केवलो दयारामस्तस्यानुयायी नासीत। तथैव प्रयत्नो जात। सफलता न मासिता। स सिद्धान्तवादी सामाजिक कार्यकर्त्ता अभवत। स मेघसिंहस्य पक्ष जग्राह। तत हस्तबलमलभत। नवीनमतृत्वमारब्धम्। दयारामस्य निर्देशानुसार कूपाज्जलमादातु निश्चयो जातोऽस्पृश्यानाम्। म्रियमाण किन्न करोति? ते सपर्याय सन्नद्धा अजायन्त। मेघसिंहदयारामयोर्नेतृत्वे तत्समुदाय कूपे समुपस्थित। यत् पूर्वमेव कृष्णचन्द्रस्य मल्ला आयुधं परिवरिता विद्यमाना आसन्। अस्य कुन्ता यष्ट्य सर्वाणि अस्त्रशस्त्राणि तदन्तिके व्यराजन्त। मन्ये नस्यापि भयानक युद्धस्य पूर्वाभ्यासोऽभवेत्।

विलोक्य दयारामो वस्तुस्थितिं पर्यचिनोत। सगर्जनमवोचत्— "भवतामयमन्यायोऽधुना नो चलिष्यति। युगपरिवर्तनं जातम्। समयानुसार भवतामपि परिवर्तन-मपेक्षितमास्ते। सावधाना भवन्तु। अत्याचारस्य युगाय क स्पृहयति। धानस्यपुष्पमस्य प्रयोगेनासद्भ्रमेव जनिष्यते। सर्वोऽपि ग्रामो रक्तिसाद् भविष्यति। अस्माकं प्रगति सर्वथावरुद्धा जनिष्यते। बापूस्वप्न साकारो नो सम्पत्स्यते। अन्यत्र क्षिपताऽस्त्राणि। कूपमुद्घाटयत सर्वासवर्णेभ्य। पशुता नैव श्रेयस्करी भवति। अन्यथा विनाशकारिणी पानधेयपरम्परा प्रवर्तिष्यते।"

स्तम्भान्तरिक्षं चकम्पे। मन्ये मेदिनी चचाल। दयारामस्य निवेदन व्यर्थं जातम्। धर्मध्वजिन प्रलय कर्तुं कटिबद्धा कृष्णचन्द्रस्य मौन सङ्केतमाप्य तज्जना निर्दय प्रहर्तु तत्परा जाता। अनवरुद्धो यष्टिप्रहारो ववर्त। नृशंसताया नग्ननाण्डव प्रवृत्तम्। एकत्र हिंसा परत्राहिंसा। एकत्रास्त्राणि परत्र रिक्तहस्तता। अस्ति कीदृश वैपरीत्यम्?? पश्यतामेव तामसीवृत्तिराष्टा। सर्वेपरस्पर रुधिरस्य पिपासवो जाता. मिथो हस्ताहस्ति, दण्डादण्डि, केशाकेशि, कुन्ताकुन्ति प्रहरण प्रवृत्तम्। दयाराममेघसिंहयो मार्घातिकाऽऽहतिर्जाता। अन्येऽपि बहव आहता। दूरस्थित कृष्णचन्द्र स्वनीत्या स्मयमान आसीत्। आततायिनोऽत्याचारिण यत् किमपि कुर्युस्तत्सर्वं स्वल्पमेव। सत्याग्रहिणामुपरि चेत्थ शस्त्राक्रमणमतिशासिक-

पुनरावृत्तिरासीत् । यो यो कूपमारोहत् तस्य तस्य कपालक्रिया विहिता । पश्यतामेव कूपप्रकोष्ठशीतलजलं तप्तरक्तरञ्जितं जातम् ।

यदानुयायिनोदयारामं मेघसिंहं च न्यभालयन्, तदा तयोर्जीवशुक पक्षी पिञ्जरादुदपतत् तयोर्निर्मम बलिदानं जातमिति सर्वैर्निरीक्षितम् । सहसा चीत्कारोऽजनि । आशङ्काभयचपलताया साम्राज्यं व्याप्तम् । दलद्वयस्याश्रुधाराभि तत्र त्रिवेणीदृश्यमुपस्थितम् । अघटितघटनापटीयसी प्रकृतिरिति जनैरनुभूतम् । यद्यावधि यन्न भूतं तदेव जातम् ।

पुत्रशोकेन कृष्णचन्द्रस्यापि हृदयगतिरवरुद्धा । तया सोऽपि पञ्चत्वमगमत् । त्रयाणामेकस्यां चितायां दाहसंस्कारो ग्रामीणैः कृत । सर्वेषां नेत्राणि सजलान्यासन् । वसतिनिवासिभि स्तेषां स्मारकं निर्मितम् यत्कूपाद् जलमानेतुमागतान् बलिदानस्य मूककथां कथयति । इति दिक् ।



# दिग्–भ्रमः

कलानाथ शास्त्री निदेशक भाषा विभाग,जयपुर

धूमशकटि[1] प्रतीक्षागले[2] शीत समधिकमासीत् गिरीशेन सकृत् प्रकोष्ठ-बद्धा[3] घटिका दिदृक्षिता, किन्तु नाडिन्धोमे तमसि न सा दृष्टिगोचरा भवत्। निशीथस्य समयोऽस्ति लघुतर चेद धूमशकटिस्थलम्, विद्युत्प्रकाशस्य तावती व्यापक व्यवस्था कथं सुलभा स्यादत्र ? गिरीशेन चिन्तितम। तथापि समग्र दृश्य विलोक्य तेनाऽनुमित यद्धूमशकटेरागमने न्यूनान्यूनम् एकाहोरा त्ववशिष्यत एव। तदैव तु निर्मक्षिकमिव दृश्यते। यदाकदा कर्मकराणा धृतकाचदीपिकाभा पादत्राणध्वनि सुदूर श्रूयते विलीयते च। द्वित्रा यात्रिणो धूमशकटि प्रतीक्षमाणा प्रतीक्षागृहेण सहैव संश्लिष्टे यात्रिविश्रामकक्षे[4] गिरीशेन सहैव वेत्रासन्दीषु[5] समुपविष्टा।

अवकाशदिनेषु स्वगृहान् प्रत्यागतस्य गिरीशस्य सर्वोऽपि समय कियत् त्वरित व्यतियात !! श्व पुनरपि विश्वविद्यालये कक्षासु गन्तव्य स्यात्। तान्येव पुस्तकानि, काव्यप्रकाश, तुलनात्मक भाषाविज्ञानम्, भारतीयदर्शनम् भवभूति, मृच्छकटिकम् । संस्कृतविभागस्य प्राध्यापका:, केचन प्राचीनपद्धत्यनुयायिन, अपरे नितरामाधुनिका', एवमेव छात्रा, कतिपये पुराणपद्धतिप्रिया, धोतवस्त्रसाधारणकंचुकनिचिता', अपरे तु पाश्चात्य वस्त्रवेष्टिता आधुनिका। संस्कृतविषयस्य स्नातकोत्तरकक्षा एव विधा एव भवन्ति समिश्रा। यथा हि छात्राध्यापकादीनामाचार विचारेषु संमिश्रता दृश्यते· तथा कक्षास्वपि समिश्रता प्रकटा-युवकाश्च युवत्यश्च सर्वे स्नातकोत्तरकक्षासु अधीयते। स्नातककक्षासु पुरुष-महिलाना पृथक् पृथक् महाविद्यालया भवन्तु नाम। भगवत्कृपया छात्रावासा नात्र भवति समिश्रा.। कन्याछात्रावास पृथगस्ति, काम भवतु स विश्वविद्यालय-परिसरे

---

१ धूमशकटि ट्रेन इत्याङ्गलभाषायाम्। २. प्लेटफार्म, ( रेलवे प्लेटफार्म ) इत्याङ्गलभाषायाम्। ३ प्रकोष्ठे बद्धा घटिका रिस्ट वाच इत्याङ्गलभाषायाम्। ४. मुसाफिरखाना इति भाषायाम्। ५. बेंच इत्याङ्गलभाषायाम्।

एव। गिरीशेन चिन्तितं यद्यदि विदेशेष्विव ममिश्राश्छात्रावासा अत्रभविष्यस्तर्हि मनोज-नवनीतमट्टशास्तस्य रसिका सहपठितस्तु सर्वमपि दिवस सहपाठिनीना कक्षेष्वेव व्यतियापयितु मचेष्टिष्यन्त। नाऽयं प्रयत्नापि बोदधुमपारयद् यत् स्वाध्याये समय न प्रदाय किमिति मनोजो नवनीतश्च कन्याछात्रावासस्याघो भ्रमणे प्रभूत समय यापयत ? किमिति तावत्काशदिवसेषु नूतनानि वस्त्राणि परिधाय स्वकीयाऽभ्यास-पुस्तिकानामादानप्रदानमिषेण[1] कदाचिदनितायाः, कदाचिच्च सुधायाः प्रकोष्ठे यातु कन्याछात्रावासप्रतीहारेण सह सख्यमापादयत ?

तस्य तु मनसि न कदापि तादृशी समुदिताऽऽकाङ्क्षा। सोऽयं सुरुचिरदर्शनो, युवा, बुद्धिमान्, विश्वविद्यालय प्राप्तप्रवेशोऽप्यस्ति उच्चश्रेण्या सर्देवैवोत्तीर्णो भवतीति सर्वे तस्मै स्निह्यन्त्यपि, किन्तु न तेन कदाप्यभीष्ट यदेवविधेषुरसिकोचितेषु निरर्थकेषु व्यासङ्गेषु समय व्यतियापयेदिति। कुतो न स्यादेवम् ? तस्य परिवार एव तादृश सदाचारपरम्परानुयायी, लब्धप्रतिष्ठश्च। भवतु स नाम ग्रामवासी, किन्तु किं ग्राम तस्य परिवारो न सुशिक्षितो न वा मूर्धन्य स्थानमधितिष्ठति ? ग्रामवासित्वे सत्यपि किं स निर्धनोऽचरा नागरिकसभ्यताऽनभिज्ञ ? किं स न जानात्यागली भाषाम् ? अथवा किं स न वेत्याधुनिकाऽऽचारान् ? छात्रावास, यत्र हि स समादृत स्थान धारयति, स बहुधा कार्यपालकपदेषु निर्वाचितोऽपि। किन्तु न तेन कदाऽपि स्वाध्यायमतिरिच्यान्यस्मिन् कस्मिश्चन व्यतिकरेऽधिक समयो यापित। इतस्तुतस्यैव छात्रावासस्याऽऽस्वामिनस्तस्य सहाध्यायिनो मनो॰ नवनीताऽऽदयोऽध्ययने स्वल्प, सामाजिक सबन्धस्थापने च समधिक समय प्रददति।

अस्मिन्नेव शीतावकाशे गृहान् प्रत्यागत स धर्मभाषेण पित्रा सगाम्भीर्य पृष्टोऽभूदिति सहसा तस्य स्मृतावागच्छत्। सप्ताहोऽपि तु नातीत, किमिति न स्मरेत्सर्व सुस्पष्टम् ?

"गिरीश किं चिन्तित त्वया कदापि विवाहविषये ? अचिरादेव त्व स्नातकोत्तरपरीक्षोत्तीर्णो भवितासि। तदनन्तर तु विवाहो न भवेदकालिक ? किन्तु कश्चन ममशील परिवारस्तु पूर्वत एव निर्धारितो मयावाचयत्नदर्शे मया दृष्टचर एव परिवार। कन्यका सुशीला, सुशिक्षिता च। स्नातिका तु पूर्वत एवाऽस्ति, सुदर्शना सेय कन्या न तिष्ठेदविवाहिता चिरकालाय। अतो यावदन्य कश्चन वरो निर्वाच्यते तत्पूर्वमेव यदि वय स्वीकृति दद्याम तर्हि ते वराका निश्चिन्ता।

---

1 नोट बुक इत्याङ्गलभाषायाम्।

स्यु'। कतिधा तु पत्राणि ते प्रेषितानि। त्वन्माता तु कन्या दृष्टवत्यपि। त्वं वाञ्छसि तर्हि पश्य तां त्वमपि !" उक्तं पित्रा।

"नैव तादृशं किमपि। पञ्चवर्षाणि तु चर्चाऽपि न विवाहस्य।"
तेन साटोपं त्वरितमुत्तरितमासीत्

मध्य एव मातोक्तवती" किन्तु पूर्वं निश्चयो, वाग्दानं वा भवत्विन्यत्र का ते विप्रतिपत्तिः ? भवतु विवाहः पञ्चवर्षानन्तरमेव। कन्यापक्षीया अपि न त्वरन्ते तावत्तु।"

'भवतु न किमपि, किन्तु वाग्दानादेरपि चर्चा ममाध्ययने विघ्नायेत। लिख्यतां कन्यापक्षीयेभ्यो यदन्यं कञ्चन वरं कृतार्थयन्तु ते।" सधाष्टर्यमनेन पुनरुत्तरितम्। एतदुपरि विद्यावता, प्रकाममनुभववता च पित्रा भूयान् वैचारिको विमर्शस्तेन सह कृतोऽभूत्। पाश्चात्यमनस्तत्वज्ञ फ्रायड-एडलरप्रभृतयोऽपि मध्ये समानीताः, याज्ञवल्क्य मन्वादयोऽपि. वर्णाश्रमव्यवस्थाऽपि सुभृशं विचारिता, समधिकं समयमविवाहितस्तिष्ठन् न किञ्चन विशिष्टं प्रयोजनं साधयति कश्चिदिति जनकेन साधयितुमिष्टं तद्विपरीतं गिरीशस्तु ब्रह्मचर्याश्रमस्याधारं सतर्कं प्रतिष्ठापयन्वदाधिको, मानसिकः शारीरश्च विकासो न भवति पूर्णो, यावत्तावदपि विद्याध्ययनं न समाप्येत, तावत्तादृशी चर्चाऽप्यकल्याणकरी स्यादित्यादि सहेतुकं प्रतिपादयितुमैच्छत्। सुतस्य तार्किकाभिव्यक्तिकौशलं मनस्येव प्रशंसताऽपि पित्रा प्रकटं केवलमिदमेवोक्तं "सर्वं तदहमपि मन्ये, किन्तु प्राचीनानामाश्रमाणां युगं तद्व्यतियातम्। चलचित्राणामिदं युगम्। अद्य हि प्राप्तकैशोर्या, प्राप्तयौवना वा बालका ऋष्यशृङ्गा इव तिष्ठेयुरित्यसम्भवम्। बहुधा मेनका विश्वामित्राणां कृतेऽमित्रायन्ते। किन्तु त्वं नाधुना तां चर्चां रोचयसि चेत्तिष्ठतु तदिदमग्रिमं ग्रीष्मावकाशं यावत्।"

सहसैव तीव्रो धूमशकटिका प्रकाशो[1] गिरीशस्य स्मृतिसमाधिं भग्नमकरोत्, परिधानपिटकमादाय[2] त्वरितमसावुदतिष्ठत्। आयाता धूमशकटिः।

× × × × ×

(२)

'शाकुन्तल'- नाटकमञ्चनस्य पूर्वाभ्यासानां दशमोऽद्य दिवसः. किन्त्वद्य यावान् विलम्बः समजायत, न तावान् पूर्वं कदाऽप्यभूत्। रात्रिरेव सञ्जाता।

---

१. हैडलाइट। २ सूटकेस इत्याङ्गलभाषायाम्।

प्रहोरत्रद्वय' घटिका वीदर समवेदत गिरीश । सार्धाप्टदादशम् कथ समयस्य निरर्थको नाश । समयनाशस्य नैरर्थक्यमिद तेन तदा ह्यनुभूतमासीद् यदा 'शाकुन्तलस्य मचनमस्मिन् वार्षिकाधिवेशने भवत्विति विनिश्चित्य विभागाध्यक्षेण नाटकस्यास्य मचोपयुक्त रूपान्तरण विधाय तदानेपथ्यस्य सपादनभारो गिरीशोपरि निक्षिप्त त सहायकत्वेन च सुधा समनुरुद्धा. तत्प्रसगेन च सप्ताहादधिकोऽवधि शाकुन्तलस्याऽऽलेखसपादने व्यतीत किन्तु न जानात्यसौ कि तत्कारणमभूद्येन प्रेरितोऽप्य सप्ताहावधि भृश परिश्रम्य आलेखमम् पूर्णमकरोदेव । सुधायाऽपि तु भूयान् परिश्रमो विहित । सा वराकी सकोच विहाय बालकाना छात्रावासे, तस्य कक्षे प्रत्यह समागत्य दिवस होरापर्यन्तमस्थात्, तस्य च श्रुतिलेखमलिखत् त्वरित लिखित्वाऽपि मौक्तिकवत्सुन्दराक्षरै सर्वोऽप्यालेखस्तया सपादित इति दृष्ट्वा चकितोऽभवद् गिरीश । निभृतमलज्जत स, तेन हि पुरुषदम्भाभिभूतेन न कदाप्यनुमितमासिद यन्महिला अपि तावत्सुन्दर, त्वरित च लिखितु क्षमा स्यु । न केवल सुन्दरमेव, शुद्धमपि । सुधाया व्याकरणज्ञानमवबुध्यापि तु गिरीशश्चकित एवाऽभूत् ॥ असद्कृतया, विनम्रतापूर्वक गिरीश प्रतिबोधित पाणिनीयव्याकरणानुरूप प्रयोग परिवर्तयतुम् । कालिदासीयाना समस्ताना[1] प्राचीनपरिवेशोपयुक्ताना च वाक्याना नवीनेषु साम्प्रतिकपरिवेशोपयुक्तेषु च वाक्येषु रूपान्तरण कार्यमित्यस्येच्छाऽभूत् । किन्तु स्वल्पमपि व्याकरणस्खलन सुधा त्वरितमेव सूचयतीति पश्यता तेन शनै शनै कालीदासीयशब्दप्रयोगानामेवाधिकाधिक तथैव स्थापन समारब्धमभूत् ।

किन्तु न कदापि दम्भस्य, घमण्डस्य वा लेशमपि सुधा प्रदर्शितवतीति स साश्चर्यमस्मरत् कथ सलज्जया तया प्रोक्तमासीदेकदा— "भवास्तु कन्याछात्रावास नाऽऽगच्छेदेवेत्यह जानामि । अत एव सकोच विहायाहमेव भवच्छात्रावासे समागच्छमेतावन्ति दिनानि । अन्यथा लेखो नाऽभविष्यत पूर्ण, प्राध्यापकमहोदयाश्च मामेवापराधिनी प्रासेधयिष्यन् 'स्त्रीशुद्रद्विजबन्धुना त्रयी न श्रुतिगोचरा', इत्यादिना वय महिला एवाऽज्ञानदोषभाज । किन्तु अद्याऽऽलेखस्य समय-परीक्षणाय । यदि भवान् मत्प्रकोष्ठे समायातु कष्ट विदध्यात्तर्हि महत्सौविध्य मे भवेत् । आलेखो मन्ये होरात्रय ग्रहीष्यति, एतावन्त च समय नाऽह परत्र स्थातु शक्यामि ।"

लज्जया, पश्चात्तापेन च गिरीशस्तारत्यमनुभूय विलय इव सवृत्त । क्षमाप्रार्थनमय त्वरित कन्याछात्रावास गन्तुमन्वमन्यत । सुधाया शालीन्य, सुशाप्रो

1. समासघटितानामित्यर्थं ।

बुद्धि, विनय च दृष्ट्वा विहस्तोऽसौ सवृत्त । मन्ये तदिदमेव कारणमभूद् यदनेन नाट्यप्रयोगे दुष्यन्तस्य भूमिकामपि कर्तुमनुमत, यदाऽऽत्मावजानात् यन्छकुन्तलाया भूमिका सुधा निर्वहेदिति । ततश्च पूर्वाभ्यासेषु भूयस्त समयमतिराहल सर्वेऽसौ समयनाशपश्चात्तापाकुलो भवति स्म, किन्तु नायमजानात्कीदृशी सा प्रेरणाऽभूद्यया साय पञ्चवादनसमकालमेवास्य पादौ विश्वविद्यालयप्रेक्षागृह प्रति स्वत एव जिगमिषु सम भवताम् । वार्षिकोत्सवानन्तरमय सर्व तदिद नाटकमचनादिक विहाय केवलमध्ययने एव समय प्रदास्यतीति सुदृढ निश्चितमनेन । मनोज-नवनीतादयस्तु नाटक पूर्वाभ्यासेषु कियन्त रसमगृह्णन्निति स पश्यति स्म उपहसति स्म च तान् मनस्येव । एवविधास्तथाकथित-सामाजिकाश्छात्रा सर्वदैव तेनोपहसिता अभूवन् । तं त्वसकृदमु प्रत्ययोधयन् 'सखे गिरीश, तपोवनस्य ऋषिकुलस्य वा पुस्तककीटायिनश्छात्रस्त्व कि जानीया जीवने कीदृशो रसो भवतीति । अरे कुमारसभवस्य भामिनीविलासस्य च पाठकाभूत्वाऽपि यदि वय खदिरवृक्षवद्रूक्षा स्याम तर्हिधिगस्माक साहित्यपठनम् ॥' एव च सवदैवैतान् समुपादिशत्-' बन्धव स्वपित्रो समधिक द्रव्य स्वस्वस्तपुटकेभ्यादाय छात्रावासाना जीवन रसयन्तो वय न जानीमो यदाधुनिकजीवने कियत्य प्रतियोगिता अस्माभिर्योद्धव्या इति । अद्य हि प्रतियोगितायुगम । विश्वविद्यालये प्राथम्य वा, समधिकानकान् वा यदि वय न लभामहे, भूत्यर्थं न द्वाराद्द्वारमाहिण्डन कर्तव्य भवेत्तदा कुमारसभवो, भामिनीविलासश्च न भोजनमस्मभ्य प्रदास्यत । अस्माक नियोक्ता नेद प्रक्ष्यति यद् भवता सस्य कतिकन्याभि सहास्ति, स भवतामकतालिकामेव द्रक्ष्यति । " इत्यादि ।

वषासु प्राथम्य लब्धवान् गभीर समादरणीयश्च छात्रोऽयमभूदिति सर्वे तस्य गौरव रक्षन्ति स्म । ततश्च तथाविधा रसिका सहपाठिनो नैन प्रकटमुपाहसन्, किन्त्वनेन ज्ञातमासीद् यत्तैस्तस्य नाम "नैयायिक" इति रक्षितमभूत । पर्यन्ते तदिदमपि तेन ज्ञातमासीद्यन्नैयायिकत्व तस्मिन् येन कारणेनाऽऽरोपितमभूत् । यथा नाट्यगृहे सहृदयास्तु रसनिष्पत्तिमधिगच्छन्ति, 'नैयायिकस्तु रगा सर्वेऽसमकुड्यासमर्पन्ति भा" न निर्दिष्टसयन्ति, तथैवाय जीवनरगमचे 'नैयायिक" एवाऽभूदिति तस्यौचित्यमेभिर्दत्तमभूत् । सर्वमिद ज्ञात्वा विनोदमेवाऽगाव बभवत, न कदाप्यकुप्यत्. यतो न तेनाऽऽत्मनि सहृदयत्वभाव कदाप्यनुभूत ।

किन्तु नाटकस्य पूर्वाभ्यासैरस्य मानसेऽज्ञात किचनाऽऽन्तरिक परिवर्तनमिव

---

१. आलेख वाचयित्वा, कियन्त समयमय प्रदास्यतीति समयनिर्धारणमिति यावत् ।

वितीर्यते इत्याशङ्कने स्मायम् । क्षणेनैव चाऽशङ्कामिमां दूरमक्षिपद्सौ । कथं तदिदं सम्भवति ? शाण्डिल्योऽनौ व्यासङ्ग, मुहोर्थपरिश्रमानन्तरं विश्राममवाप्य मनोविनोदोऽयं कां वा हानि सम्पादयेत् ? नाऽभ्य तत्र कामपि हानिरन्वभवन् । सुधापि तु प्रथमं श्रेणिका छात्रैवाऽभूत् । साऽपि तु नाटकेऽस्मिन् भूयासं समयं यापयति । सापि गभीरा, समादृता च छात्राऽस्ति । द्वयोस्तयाविधं साम्यं सुस्पष्टमेव । तर्हि सायङ्कालीने होराद्वये पूर्वाभ्यासैर्व्यतियापिते को वा दोषः समापतित ? सर्वमिममन्तद्वन्द्वं निरन्तरमन्वभवद्सौ । किन्तु स्वकीये व्यवहारे पि तु ईषत्परिवर्तनमयमनुभवति किमिदम् ? यो हि गिरीश अनितया, ऋचया, अन्यया वा कयाचन सहपाठिन्याऽभ्यास-पुस्तिका प्रदातु, कस्यचन पुस्तकस्य नाम लेखितु वा पृष्टोऽपि वाक्येनैकेनैवोत्तरमदात् सोऽधुना पूर्वाभ्याससमयेऽनितया, माधुर्या चाभिवादित किमिति सस्मितमुत्तरं प्रददाति ? अनिता माधुरी च अनसूया-प्रियंवदयोर्भूमिके अस्मिन् नाटके निर्वाहयत । किमिति सर्वा एता स्वं स्वं भूमिकां शिक्षयन्नपि स प्रमोदमनुभवति । वयःपूर्वे श्रीनस्य पादत्राणयुगस्य प्राचीनतां दृष्ट्वा किमित्यनेन नूतनोपानत्क्रयणमिष्यते ? न केवलमिष्यते एव, पूर्वाभ्यासस्य तृतीये एव दिवसे क्रीतमप्यनेनोपानद्युगम् ।

नाटकेऽस्मिन् नवनीतोऽप्येकां भूमिकां वहति, मनोजोऽपि । द्वावपि सुघस्मिगात्रौ युवकौ । सामाजिकौ, लोकप्रियौ चाऽपि । कन्याछात्रावासस्य सोपाने सह तयोर्यावान् परिचयस्तावान् नान्यस्य भवेत् । किन्तु द्वयोरप्यनयोर्वाणी न तावती गभीरा, उच्चारणं च न तावत्स्फुटमिति विभागाचार्येण गिरीश एव दुष्यन्तस्य भूमिकायै वृतोऽभूत् । पूर्वाभ्यासानां सञ्चालनस्य प्रभूतो भारोऽपि तेन गिरीशस्यैवोपरि प्रक्षिप्त आलेखोऽपि तेनैव लिखितोऽभूदिति कृत्वा । नवयुगीना अनिता माधुरीप्रभृतयश्छात्रा प्राचीनपरिपाटीस्टो पुस्तककीटस्यैवाऽस्य दुष्यन्तत्वेन चयने मन्ये निराशामनु भविष्यन्तीत्याशङ्कितमनेन । किन्तु किमिदं विपरीतं सञ्जातम् ? त दुष्यन्तत्वेन वृत वीक्ष्य यथा सुधा प्रासीदत्, तन्नु प्रत्याशितमेवाभूत्, किन्तु नवयुगीनाः कन्यका अपि चयनेनानेन प्रासीदन्नेवेति तेन श्रुतम् । तदेव न जाने केन कारणेन, गिरीश प्रस्तावितवान् यन्नवनीतः कण्वस्य, मनोजश्च विदूषकस्य भूमिकां निर्वहेदिति । त्वरितमेवेदं समनुमतमाचार्येण । किन्तु प्रस्तावस्यास्यान्तः कापि नेर्ष्या तु नाऽभूत् ? नैव, नैव । किमिति स्यादेवम् ?

× × × × ×

( ३ )

माघीयशीतस्य निशीथे यदा प्रेक्षागृहाद् दर्शकाः शाकुन्तलस्य मञ्चनं प्रशंसन्तो

कृप प्रशस्यमाना प्रभूवन्नत्र सर्वेषां मुखादेकैव वाणी निरसरत्। 'दुष्यन्त-शकुन्तलयोर्भूमिके निर्वहता कलाकार-द्वयेन तु चमत्कार एव कृतः। सजीव इव तैर्विहितः कालिदासः।' दर्शकेषु कुलपतिः, प्राध्यापकाः, सम्भावितानागरिकाः वरिष्ठाः प्रशासकाः, पत्रकाराः कलाकाराः सर्वेऽप्यासन्। कुलपतिना, प्रशासकैश्च विभागीयाचार्यं स्वप्रशंसा कलाकारयोः सकाशं प्रापयितुमनुरुद्धः किन्तु पत्रकारास्तु नेपथ्यान्तरेव प्राविशन्। सहस्तपीडनं तैर्गिरीशोऽभिनन्दितः। तदिदमनुमातुं सुशक-मासीद्यत् श्वस्तनेषु समाचारपत्रेषु गिरीशस्य मुक्तकण्ठं प्रशंसाना स्तम्भा दृश्यन्ते। केयूरमण्डितबाहुरयं सस्मितं सविनयं चाभिनन्दनानि स्वीकुर्वन्नासीत्, एकवेणीधरा, शुभ्रवस्त्रावृता स्वकीयमभिनन्द्य सौन्दर्यं द्विगुणमिव कृत्वा प्रसारयन्ती सुधाऽपि तेषा-मभिनन्दनानि विनयावनता भूत्वा स्वीकुर्वाणाऽभूत्। विभागीयाचार्यो हर्षगद्गदो भूत्वा समभ्यनन्द द्वावपि। तदैव शैत्यापनोदननिपुणा चेतन्यपर्णी[1] उष्णपेया समायाता। आचार्येण, प्राध्यापकैः, कलाकारैश्च तस्याः रसास्वादो गृहीतः। न ज्ञाने, कतिवारं मतडिक्लाकचकश्छायाचित्रग्राहकैस्तथा[2] चित्राणि गृहीतानि, कति-पयैश्चस्त्वैस्तु तस्य स्मृतिहस्ताक्षराण्यपि[3] जिघृक्षितानि।

अपूर्वः कश्चिदयमनुभवोऽभूद् गिरीशस्य। कतिशो विश्वविद्यालयीय-परीक्षास्वनेन प्राथम्यं लब्धमभूत् तदाऽपि जनानामभिनन्दनान्ययमो स्वीचकार, वादविवादप्रतियोगितासु प्राथम्यं लब्ध्वाऽप्यभिनन्दनान्यनेनार्जितान्यभूवन्, किन्त्वस्या रात्रेरभिनन्दनेषु कीदृशमभूद् वैलक्षण्यं यदनेन चायचषकं सोधुचषकमिवानुभूतम्। केन कारणेनाद्यतनं साफल्यमिदं गरिमास्पदमनुभूयत इति विचिन्तयितुमवसरोऽ-प्यनेन न लब्धो यदा केनचन सूचितं यन्मस्तारशकटि[4] कलाकारान् स्व-स्वगृहान् प्रापयितुं प्रतीक्षते। चाय-पानं समाप्य नगरस्थैश्छात्रावासीयैश्छात्रैर्गमनानुमति याचिता। छात्राबाला सर्वे निष्कटस्था एवाऽभूवन्। अतः सुधां विहाय माधुरी, अनितादयोऽन्याश्छात्राश्च तस्यामेव शकट्यां प्रयाता। आचार्यादयोऽपि निरगमन्। मनोज्ञ-नवनीतादयः स्वकीयैर्द्विचक्रैर्निर्गता भवेयुरिति सर्वे जानन्ति स्म। दुष्यन्त शकुन्तलादिनायकयोः कृतेऽभिनन्दनानां पूरः इयानभूद्यत् ताभ्यां स्ववेषापवतारणाय समय एव न लब्धोऽभूत्। अतः शीघ्रं नाट्यवेषापवतारणमाभ्यामारब्धम्। स्व-स्व परिधानानि परिधाय यदा तौ बहिरागतौ तदा मञ्चप्रबन्धका विद्युत्प्रवाहादुपसंहारे संलग्ना अभूवन्। प्रेक्षागृहाद् बहिरागत्य द्वाभ्यामपि परस्परं दृष्टिपातं कृत-

---

१ चाय इति भाषा। २ फोटोग्राफर इत्याङ्गलभाषायाम्।
३ आटोग्राफ इत्याङ्गलभाषायाम् ४. मोटर बस इत्याङ्गलभाषायाम्।

किन्तु नैकेनाप्यपरोऽभिनन्दित । मनसि परस्परमभिनन्दनप्रदानस्य सत्यामपि तीव्रायामाकांक्षायां किमित्येनयोर्वैखरी नात्र प्रसृतेति नैकोऽप्यजानात् विचित्रा समभवद् द्वयोरपि मन स्थिति । गिरीशेन स्पष्टमनुभूत यत्साफल्येऽस्मिन् सुधाया साहचर्यस्यापि वर्तते कश्चन भाग: । किं तदिदमेव साऽप्यनु भवति ?

"सर्वे गता' । शीत च प्रबलम् । अह भवती छात्रावास प्रापयानि, तत परावर्तिष्ये ।" गिरीशेनोक्तम् । गिरीशस्य छात्रावास: पूर्वमागच्छति स्म, तदनन्तर कन्याछात्रावासोऽभूत् ।

"चायपानमेतावदभूद् यत्तत्र गत्वा निद्राऽऽगमिष्यति इत्यत्र सन्देह एव ।" स्मयमानमुखाम्बुजया सुधयोक्तम् । द्वावपि स्फुटमहसतामेतदुपरि ।

"अद्यतनी सफलता भवतीमेवाधारीकुरुते इत्यहमनुभवामि । सर्वोऽप्यालेखो भवत्या नायिकाया प्रमुखी भूमिका भवत्या . " गिरीशेन वक्तुमारब्धम् ।

"अहो विनय । आलेखे किममून्मदीयम् ? भवता तु सर्वं लेखितमासीत् ।"

"समग्रमपि नगर श्वो भवत्या प्रशसाया व्याप्तृत स्यात् । पत्रकाराणा प्रतिक्रियया किं भवती नानुमाति ?" गिरीशेन किंचिन्निकटमागत्य कर्णान्तिकमिव जल्पितम् ।

"प्रथम तु प्रशसा भवत एव स्यात् । भवतामभिनय वीक्ष्य तु मयाऽप्यात्मा विस्मृतोऽभूत् । यदि मदीया काचन प्रशसाऽपि भवेत्तर्हि तस्यामपि भावत्कीमेव प्रशसामह द्रक्ष्यामि ।"

"किमिति ?"

"यतो हि मदीयाया भूमिकायामपि प्रतिवाक्य भवतामेव तु मार्गदर्शन-मासीत् ।

द्वाभ्यामप्यनुभूत यत्स्वल्पीयानपि छात्रावासपर्यन्तो मार्गं कियान् प्रलम्ब सम भूद्यत्तयोर्वार्तालाप' समाप्तिमेव नायाति स्म । वार्तालापेऽस्मिन्ननुभूतपूर्वो मधुरिमा कथमनुभूयते स्मेति द्वाभ्यामपि ज्ञात न वेति न वक्तु पार्यते ।

कन्याछात्रावासस्य प्रमुखद्वाराद् बहिर्विंशसन्दी पतिताऽभूत । किंचन चलन्नेव गिरीशस्तदुपरि निषण्णोऽभूत् । 'किं भवानत्रोपवेक्ष्यति ?" सुधया साऽऽश्चर्यं पृष्टम् ।

"क्षणमत्रोपविश्य चिन्तयितुं वाञ्छामि कथं तदिदं सर्वं सञ्जातम् ?"

"किं सर्वम् ?"

"मा पृच्छ तत् । क्षणं चिन्तयामि तदा वक्ष्यामि, न जाने किमिति तादृशमद्भुतमुत्तरं गिरीशः प्रादात् ।

"चिन्तय, तदा वदे । अहमप्यत्रैव तिष्ठामि तावत्" परिहासपूर्वकं सर्वदा सहज-गम्भीरयाऽनया छात्रया समुत्तरितम् अत्रैव च स्थितवती । किमिदमभूद् येन निशीथे तस्मिन् शीतस्य प्रकोपं नैनयोः कतरोऽप्यन्वभवत् ? मन्ये तदिदमपि कतिपयक्षणानन्तरं ताभ्यां नानुभूतं स्याद्यतस्तौ विशालपटे इति । तस्मिन् परिवेशे तदिदं तु कथमनुभूतं भवेद् यत्कश्चन तौ तत्र स्थितौ पश्यन्नपि स्यात् ॥ किन्तु हन्त । किमिदम् ? होरार्धानन्तरं ताभ्यामनुभूतं यत्समुमेव प्रलम्बतरपक्षे पृष्ठतोऽन्धकारे कश्चन जनः शनैः शनैरपसरति । द्वाभ्यामपि सावधानं दृष्ट्वा प्रयतितमनेकैः, न द्वावपि तु त्रयो जनाः अनुमिताः । गिरीशेन शनिसंख्या, गात्रयष्ट्या चानुमितं यत्तेषामेको नवनीतः स्यात्, अपरो मनोजः तृतीयश्च राजपाल इवानुमितः । छात्रावासस्येमे छात्रा निशीथेऽस्मिन्नत्र किं कुर्वन्ति ? अस्मिन् शीतेऽत्र किमिति समायाताः । किन्तु तावता कालेन सुदूरं प्रयातास्ते सर्वेऽपि । ततश्च किमिदम् ? सुदूरादेव सम्मिलितस्याट्टहासस्य ध्वनिः कथं श्रूयते ? पुनरप्येकोऽट्टहासः ॥ अधुना तु सुनिश्चितमेव यदेते त एव छात्रावासीयाश्छात्राः । ध्वनिरपि तस्य सुपरिचितः । तेन न ज्ञातं कदा तत्पार्श्वात् सुधा समुत्थाय, केन द्वारेण कन्याछात्रावासं प्रविष्टा भवेत् ? किं किञ्चिद् द्वारं तदाऽप्युद्घाटितं भवेत् ? मन्ये किञ्चित्-समयं पूर्वमपाऽऽयाताभिश्छात्राभिर्द्वारमुद्घाटितं रक्षितं स्यात् ।

अट्टहासैर्भग्नसमाधिर्गिरीशः कदा समुदतिष्ठत्, कदा कुत्र प्रचलितः कुत्र च प्राप्तः, इति नायमजानात् । अपर इव कश्चनायं समाधिर्भवेत् ।

× × × × ×

(४)

छात्रावासीय-घटिकया यथैव नव वादितानि तथैव गिरीशः स्वपरिधान-पुटकमादाय निभृतं छात्रावासाद् बहिरसरत् । सोऽजानात् यत् छात्रावासीयानां कृते नैशभोजनस्यायं समयोऽभूत् । ततश्च सर्वेऽपि भोजनकक्षे पृष्ठतो भोजनव्यापृता भवेयुः । किन्तु किमिदम् ? रणवीरः कुतश्चन समागच्छन् छात्रावासस्य प्रमुख-प्रवेशद्वारि दृष्टस्तेन ।

'क्व गिरीश ? कुत्रचन गच्छसि किम् ? किमितीदं वस्त्रपेटकम् ?'
तेन पृष्टम् ।

'आम भ्रातः । कतिपयदिवसानां कृते गृहं गच्छामि । तूर्णमेव प्रत्यावर्तिष्ये ।' उत्तरितं गिरीशेन ।

गृहम् ? एषु अवकाशदिवसेषु न गतं किं त्वं गृहम् ? अयं त्ववकाशोऽपि नास्ति । वार्षिको महोत्सवानन्तरं सम्प्रति पठनस्य क्रमस्तीव्रतरो भवेत् । त्वं कथमस्मिन् वार्ष्णावसरे त्वरया गच्छसि ? किं तव कश्चन विशिष्टकार्यव्यापारः ? कुशलं तु सर्वत्र गृहे ?'

"सर्वं कुशलम् किन्तु विशिष्टं कार्यमकस्मादापतितम् । तदर्थं पित्रा सह कश्चन विमर्शो विधेयोऽस्ति । तं विधाय पुनः प्रत्यावर्तिष्ये । शृणु द्रम्माणि गृहाण । इमं छात्रावासभोजनालये मासिकशुल्कं देयं स्यात् । मया पूर्वमस्य निधानं विस्मृतम् । त्वं मदर्थं तत्र तदिदं विलिखये । अहं सप्ताहादधिकं समयं न प्रतीक्षामि परावर्तने । तथापि यथासमयं द्रव्यप्रेषणं भवत्विति त्वा कथयामि ।' इति कथयता गिरीशेन रणवीरस्य हस्ते मुद्रा निहिता । 'इदं त्वपरं मदर्थं कुर्याश्चेत्साधु भवेत् । पुस्तकालयस्य पुस्तकद्वयं मया गृहीतमासीत् । तत्प्रत्यावर्तनस्यापि समयः श्व एव निर्गच्छेत् । वार्षिकोत्सवानन्तरं दिनत्रयस्य निरन्तरमवकाशोऽभूत् । तस्मिन्नवकाशेऽध्ययनव्यापृतेन मया न बहिर्गन्तुमपि पारितम् । तत इदं पुस्तकद्वयमपि पुस्तकालये मन्नाम्ना परावर्त्यं । पूर्वं त्वत्र गृहे एव तदिदं नेतुमवाञ्छम् । किन्तु द्वारि त्वं मिलित एव, अतः किमिति न तुभ्यमेव तदिदं प्रददे ? ममास्तदिदमपि त्वया कर्तव्यम्, कृपया, इति ब्रुवाणेन गिरीशेन तत् पुस्तकद्वयं रणवीराय स्ववस्त्रपेटकान्निष्कास्य प्रदत्तम् । रणवीरो नामिलिष्यच्चेत् स पुस्तकद्वयमिदं गृह्णानेव नेतु विवशोऽभविष्यत् ।

रणवीराय 'दिनत्रयावकाशे मया बहिर्गन्तुमपि न पारित मिति कथयन्ताय मनस्यजानादयत् स मया न वक्ति । निश्चयमिदं न तत् छात्रावासस्थेन ध्यनितमपि सम्भूत् किन्तु स्वग्रामस्यैकस्य मित्रस्य नगरस्य गृहे यत्र निवसन्नय तस्य सुहृत् नगरस्य[1] निर्माण्यामेकस्यां कर्मकरोऽभूत्, निभृत ध्यनिवाहितम । मित्राय यानेन कथितमभूत् यत् छात्रावासे भृशं व्यवधानेषु दिवसेष्वध्ययनस्य स्यादिति नाहं तत्र स्याम्

1 फैक्टरी इत्याङ्गलभाषायाम् ।

वाञ्छामि । तत्र मदीया अन्ये सहपाठिनः समयं व्यनियापयेयुरित्यवेकान्ते किंचन पठिष्यामि ।"[1] सत्यमेव च तेनैषु दिवसेषु नान्यत् कृतम् । अध्ययने, एकाकिचिन्तने, मनने, सिद्धान्तोत्कने, निदिध्यासने च दिनत्रयं, दिनचतुष्टयं वा कथं निरगादित्यनेन गणितमपि न । समाचारपत्रेषु कदा किं प्रकाशितमित्यपि द्रष्टुं नास्य वाञ्छा समुदिता । भोजनमप्ययं पार्श्वस्थे पान्थावासे[1] निभृततमासाधारणेषु समयेषु गत्वाऽकरोत् । ग्रामसुहृत्सु एक वशेवाऽऽसीन । स प्रायशः स्वनिर्माणी-भोजनालये एव भोजनं करोति स्म, स्वल्पीयसि एव च समये याहोरात्रे सकृत्स्वपकोष्ठमायाति स्म । अतः प्रकोष्ठस्य तालिका गिरीशस्य सविधे एवाऽतिष्ठत्तेषु दिवसेषु । अद्यैव स तां स्वसुहृदे परावर्त्य निभृतं छात्रावासमागतः, स्ववस्तून्यादातुम् । नायं कंचनात्र द्रष्टुमवाञ्छत् । इदमपि साध्वेव जातं यद् द्वारि रणवीर एव मिलितः, न मित्रेषु तेषु कश्चन येषामट्टाहासैस्तस्य समाधिस्तस्मिन् निशीथे भग्नोऽभूत् ।

तदैव तेन त्रिचक्रा धूम्रशकटिका[2] राजमार्गे यान्ती दृष्टा । न तस्यां कश्चन यात्री स्थितोऽभूत् । द्रुतमेनामाकारयदसौ । तस्यां स्थित्वा निरदिशत् सोऽयम् "द्रुतं धूमशकटिस्थलं प्रति चल । वाष्पयानस्य समयो निकटागत एव ।" सरभसं यानमिदं राजमार्गे धावितुं प्रारभत ।

---

१ होटल इत्याङ्गलभाषायाम् ।

२ साइकिलरिक्शा इत्याङ्गलभाषायाम् ।



# मूल्यान्यमूल्यानि

शशि गुप्ता

"मातः ! अद्य मम कतिपयानि मित्राण्यागमिष्यन्ति । तेषां कृते किञ्चि-दुष्णपेयं मिष्टान्नं चेष्यते ।" विजयेनोद्घोषणेव कृता । "कथं अद्यापि मित्राणि ? ह्य एव समागच्छन् ते । किमिदम् ? अधुना त्वर्जनमपि न करोषि । अध्ययनं चाऽस-माप्तमेव । ततः किमर्थमेतदामन्त्रणादिकमायोज्यते त्वया" मात्रा स निर्भर्त्सितः ।

'अम्ब ! त्वं न जानासि । एष खल्वाधुनिको व्यवहारः' । यदि नाम मित्राणि नाऽऽमन्त्र्यन्ते, तदा त्वस्माकं प्रतिष्ठैव नशिष्यति" विजयः स्वमातरं समाश्वा-सयितुं प्रायतत ।

"कथं तदोपाहारगृहं नैव नयसि सुहृदः ? एतदर्थं रूप्यकाणि तु प्रतिमासमादत्से त्वम् । आवश्यकतैव कुत्र विद्यते स्वगृहं जनसङ्कुलं विधातुम् ?" भुकुटिं प्रायच्छत् सा ।

"बाढं बाढम् । अद्य तु समारम्भं विधेहि । न पुनरामन्त्रयिष्ये तानि मित्राणि ।" पराजित इवैनया युक्त्या न्यवेदयत् सः ।

अम्बा तु प्रहृष्टा नम्रतामेनामालक्ष्य । जानाति सा पुत्रस्य मुधावचनानि । परं किं कुर्यात् सा ? एक एव तु पुत्रः । न काऽप्यन्या सन्ततिः । नैनैव भोग्यमेतत् खल्वर्जितं धनम् । परं निरर्थको व्ययस्तु निवारणीयः । अन्यच्च सेविका न तिष्ठति गृहे प्रतिमासम् । स्वकीयं च तस्याः स्वास्थ्यं न तु बाधासमर्हम् । अतएव सा पुत्रस्यै-तादृशमुत्साहं शिथिलयति स्म ।

सन्ध्याकाले विजयस्य सुहृद आगन्तुमारभे । पञ्चसु तेष्वेका युवतिरप्य-विद्यत । हेमेत्यभिधानमासीत् तस्याः । नैसर्गिकं तदीयं सौन्दर्यम् । वेशभूषा चातीव रम्या । युगानुकूलं तस्या नैपुण्यं बलादाकर्षति स्म युवकान् । तैः परिवृता सा मुक्त-भावेन स्मितान्यकिरत् । यदि कोऽपि तस्या हस्तं धर्तुं प्रयतते, तदा सा नैव वारयते ।

परं केनाऽपि व्याजेन इमं तु शीघ्रमेव प्रयाजहार सा। स्पष्टतः तदीयोपस्थित्या स्मितैरेव सर्वे एव युवका हृष्यन्ति स्म।

यदा च भोज्यसामग्री तत्राऽऽनीता तदा ते हेमां प्रीणयितुं वस्तूनि प्रायच्छन् पौनः पुन्येन। सदयं स्मितं सर्वेषु समारब्धं तया। हेमाऽप्येतादृशमनुनयं दृष्ट्वा तथ न मोदते। परं भक्षणस्य तु सीमा भवति। सर्वां भोज्यसामग्रीं यथ सा निःशेषं करिष्यति? तत्कृततया धन्यवादा एव प्रदत्तास्तदनन्तरम्। न किमपि स्वीकर्तुं मक्षमत सा। तस्या निषेधमात्रमालक्ष्य ते स्वयमपि यत्किञ्चिदप्रत्त माध्रातु वा प्रायतन्त। अन्तराले च महाविद्यालयमधिकृत्य वार्ता अपि चालिताः स्म।

"अद्य तु गुप्तमहाशयैः स्वभाषणे न किमप्यभिनवं प्रतिपादनं कृतम्। ते त्वद्य भाषणाय प्रस्तुता एव न प्रतीयन्ते स्म।" एकेन समुच्छ्वसितम्।

"अहं तु भाषणस्य समाप्तिं यावद् जृम्भणमेव चकार।" द्वितीयेनोदीरितम्।

"अरे! तदीया दृष्टिस्तु इमामेव स्निह्यति स्म। वराकः स कथं क्षमेत भाषणाय?" कथनेनानेन सह हेमाया दिशि नयनं सङ्केतमिव कृतवान् तृतीयो युवकः।

"नहि, नहि!" विरोधमिव प्रदर्शितवती हेमा। "प्राध्यापकास्तु वीणामेव स्तोष्यन्ति। मद्दिशि तु एकवारमपि न दृष्टं तैः।" प्रहृष्टेन प्रतीयते स्म सा कथयन्त्येतत्। परं सत्यस्य लेशोऽपि नाऽविद्यत तत्कथने, इति तु सर्वे एवाऽजानिषु। तस्याश्च तदीयां वचनभङ्गिमामालक्ष्य समस्त एव युवकवर्गोऽट्टहासं कर्तुमारेभे। नैव प्रवञ्चनायास्त खल्वेवमिति। प्रवञ्चितं तं सर्वे। आत्मानं प्रति तेषां निष्ठया हेमाऽपि बहुमोदम्। तदनु सा स्वयमपि मुक्तभावेन जहास।

"आः! गृहीतैवाऽस्मि।" कथनेनानेन सार्द्धं सर्वे खलु पुनरप्यट्टहासं चक्रुः।

एवमेव मोदमानास्ते होराद्वयं यावत्तत्रैवाऽतिष्ठन्त। ततश्चाऽऽगामिन्यववाशदिवसे चित्रपटदर्शनाय निर्णीय नगरं प्रस्थितास्ते। तेषां निगमनमालक्ष्य विजयस्य मात्रा दीर्घमुच्छ्वसितम्। साम्प्रतमखिलमेव तदीयं गात्रं पीडया समन्तमासीत्। परं यदात्या तया चषकपात्रादीनि प्रक्षालितानि। ततश्च परिश्रान्ता सा क्षणमात्रं शय्यामस्थास्त। परं तस्या भाग्ये विश्रान्तिर्नलिखिता आसीत्। अतः

परं तदा आचार्योऽपि निर्मूल इव सञ्जातः । 'धिगेतादृशं पुत्रम् । न खलु विचारयति स पितृकुलस्य मातृकुलस्य वा प्रतिष्ठाम् ।' तथा निगदितं मनस्येव ।

तदनु यदा खलु निद्रावशं समुपगता सेति तु तया नैव ज्ञातम् । परं कपाटोद्घाटनमुद्रणाभ्यां पुनरपि जागृतिमापन्ना सा । झटित्युत्थाय सा मुख्यद्वारमुद्घाटयामास ददर्श च मन्दमन्दं गच्छन्तीं कामपि युवतिं किञ्चिद्दूरं । पृष्ठादृश्या परिधानेन च हेमाभा खल्विव सम्यगेव प्रत्यभिज्ञाता तया । एतद्दृष्ट्वा बहुकालं यावत्तत्रैव तस्थौ सा । परं रुक्मिणी तु सम्प्रति न किमपि द्रष्टुं पारयामास तु ।

'अम्ब ! किं पश्यसि ?' विजय पृच्छति स्म । किन्तु स पृष्टः स्थित्वा मौनमेवाचरति स्म । सत्यमेव रात्रिगतं रहस्यमनावृतमिति तु नैवज्ञातं तेन ।

'पश्यामि स्वकीयं दौर्भाग्यम् ।' समुद्विग्नेन वचसा प्रत्युत्तरं दत्तं प्रयत्नेन तया ।

'परं न कोऽपि स्वभवने निवासमानं दौर्भाग्यं दृष्टवान् ।' मुखेन वाक्चातुर्यमिव प्रदर्शितम् ।

'गृहान्तः प्रविष्टमेतन्न निवर्तते सत्वरम् । विजय ! वारितस्त्वं त्यज । न योजनीयं त्वया विपन्नया सह । सर्वथैवाऽशुभावहा भवन्ति सम्बन्धा ह्येतादृश्याः पुत्राय । अप्रशस्ता खलु पितृकुलं भर्तृकुलं चाऽऽविलयितुं क्षमन्ते । अतोऽस्याः साहाय्यं सद्य एव परित्याज्यम् ।' उपदिदेश सा पुत्रमेनम् ।

“अलं भाषणेन मातः । तामहं परिणेतुमिच्छामि । तयाऽपि स्वीकृतो मदीयः प्रस्तावः । अद्यैव तत्पित्रोरनुमतिं सम्प्राप्य वाग्दानस्य घोषणा करिष्यते पक्षद्वयेन । अतस्त्वया न किमप्यन्यथा चिन्तनीयं कथनीयं च ।” विजयस्य कथनं बुद्धिसम्मिश्रितं समाश्वासनमिवाऽभाति स्म ।

वार्धक्येन प्रपीडिता सा तादृशेन पुत्रवचसा किमपि विकलत्वं सम्प्राप्ता । क्षणार्धं यावत् सा तनुजस्याऽऽननमेव निभालयामास । न विश्वसितं तया यदद्य तस्य मस्तकं शुष्कतृणैरेव परिपूर्णम् । न कदापि चिन्तितं तया यत् तस्याः स्वकीयस्तनयः स्व विवाहार्थं मातुरनुमतिमप्युपेक्षिष्यते । तदीया वार्धक्य-तरणी तु साम्प्रतं मध्ये समुद्रं निमज्जति सत्वरमिव हृदये । न किमप्यवशिष्टं तज्जीवनार्थमिति निश्चित्य सा प्रोवाच-

"यावज्जीवं त्वहं न तां प्रवञ्चनामयीं पुत्रवधूं स्वीकरिष्यामीति जानीहि त्वम् । अपरच्च न चेत्त्वं त्यजसि स्वगृहं, तदाऽहं यत्र कुत्रापि यास्यामि, भिक्षावृत्तिं चाश्रित्य अवशिष्टं जीवनं यापयिष्यामि ।"

धारयित्वैनत् सा प्रत्युत्तरमश्रुल्वैव स्वकक्षान्तं प्राविशत् । कक्षाभ्यन्तरमप्या-र्गलामयोऽभवन् । विजयाऽपि क्षणं यावदन्तर्हितया जया स्थित्वा स्तब्धा इवाऽतिष्ठत् । ततश्च स स्नानादिक्रियाभिर्निवृत्तः सन् गृहान्निरगात् । बहिर्द्वारस्य कपाटौ तु तेन बहीरुमा अधानन पिहितौ । एवं दृष्टुं स प्रमथितो प्रति नैजमाक्रोश व्यनक्ति स्म ।

/ × × ×

त्वरितगत्या स आविश्वसुरस्य गृहमाजगाम । परं नाऽगोचत प्रातरेवेदृशोऽतिदेशागमनं हेमाया पित्रे सनमहाशयाय । स्मेरोऽव स्वरेण तं पृष्टम्—

"किमिष्यते भवता ?"

"हेमां मिलितुमिच्छामि ।" विजयस्य स्वरं धिक्कार इव प्रतीयते स्म ।

"स्वपिति सा । अतोऽपराह्णे समागन्तव्यं भवता ।" सनमहाशयेन वार्तासमाप्तिरिव समूचिता ।

"परं तदैवाऽहं समागतोऽस्मि । कार्यं चाऽऽवश्यकम् । पश्यन्तु श्रीमन्तस्तावज्जागृता न वा सा ।" एवं स दृढमाग्रहं प्रकटीचकार ।

श्रुत्वैतत् सनमहाशयो भृशं चुकोप । तन्नयनाभ्यामग्निस्फुलिङ्गा इव वर्षितुमारेभे । तदीयावोष्ठावपि स्पन्दनबाहुल्यवशात्ततनमिव चक्रतुः । नैव स स्वगृहे येन केनाऽपि वार्त्तिकेन निर्देष्टव्य आसीत् ।

"निष्क्रमण विधेहि तावत् । न सा दिदृक्षते कमपि । मत्गृहात् सत्वरमेव प्रयातना सा त्वदर्थं न किमपि कथयामास ।" उदीर्यैतत् स परावर्तत ।

"शृणुत यूयम् ।" स्वरं कामपि नम्रतामानीय निजगाद सः । "हेमाया सान्निध्यं स्पृहणीयमासीदेतत् परं नैवाऽनुमन्यत तत् खलु भवद्भिः । अत एतत्तु कथ्यते— तदर्थं किन्तैव मया ।"

"अस्तु । त्वरस्व तावत् ।" प्रत्यावर्तयत् सनमहाशयः प्रावोचत् ।

"मया त्वेतदेव निवेदनीयं यत् ।" तदीयं वाक्यमपूर्णमेवाऽवर्तत ।

"किं तन्निवेदनीयम् ? शीघ्रता विधेहि । मया त्वन्यान्यपि कृत्यानि विधेयानि ।" समयविनाशेन भृशमसन्तुष्टः सनमहाशयः ।

'क्षान्तं त्वया , न जाने श्रुतो न वा परम् ।"
पुनः वाक्यस्य जननेन तस्य भीतिः स्फुटमायाता ।

'किं त्वं परं पराभितिं स्वीकरोषि ? कथय किं वक्तुमागतोऽसि । अन्यथाऽद्य कुरु स्वग्रहम् ।" विजयं तर्जयन्निव पप्रच्छ स्म सेनमहाशयः । विजयस्त्वेतया प्रताडनया समधिकं बिभयाञ्चकार । हेमा चेत्तत्राऽभविष्यत् तदा तु सर्वमेव सुकरम-भविष्यत् । परं सा तु गृहं स्वपितीति विचिन्त्य स भृशमशोचत । भीतेन खलु न किमपि साधयितुं शक्यते, इत्यपि स विचारयामास । एष अवसरो न पुनरागमिष्यतीति ज्ञात्वा स साहसं सङ्गृह्य समवेदयत्— 'उद्वोढुमिच्छामि हेमामहम् । तया चाऽनुमतोऽहं प्रस्तावमेनम् । साम्प्रतं भवतामाशीर्वचांसि याचेऽहम् ।"

"किम् ! किम् ! उद्वोढुमिच्छसि हेमाम् ?" कथयित्वैतत् सेनमहाशय उच्चैर्जहास । 'तत्पूर्वं तु स्वमुखं पश्य कस्मिंश्चिदपि दर्पणे । न जाने कतिपयाः त्वादृशा युवकास्तथैव कामयन्ते मदीयां पुत्रीं सम्प्रति मन्ये ।' तव स उपह-सितवान् तं प्रश्नोत्तरम् ।

'न कामयेऽहं भवत्सम्पत्तिम् । याचेऽहं केवलं हेमामुद्वाहार्थम् ।' इत्युक्त्वा स प्राक्रोशत् ।

"परं निर्धनस्य गृहे न वस्तुं क्षमते मदीया पुत्री । तस्याः पूर्णे स्वव्ययमात्रं तु दैनिकाय व्ययायाऽप्यपर्याप्तम् । किं तादृशं वर्तते त्वत्सामर्थ्यम् ?" कथयाऽपि हीनदृष्ट्या विजयं पश्यन्नापन हेमाया जनकः ।

"नहि, न क्षमेऽहं तादृशे व्ययाय । अधुना त्वधीयानोऽस्मि । परं मम पिता गरिम परिवारोऽस्पूर्णे किमपि द्रव्यमर्जयन्ति कोषागारे । अध्ययनसमाप्ति यावत्तदेव रक्षेयमस्मदीयं जीवनम् ।" विजयेन नम्रतया निवेदितम् ।

"गच्छ तावत् । अध्ययनं समाप्यैवाऽऽगमनीयं त्वया ।" सेनमहाशयेन निगदितम् ।

अत्रान्तरे हेमाऽपि तत्राऽऽजगाम । तां दृष्ट्वा विजयः समुत्साहित इव गजानः । परं तिरस्कृतदृष्टिनिपातनेन तदीय उत्साहः शनैर्याऽपभ्रंशत् ।

'किमर्थं न ब्रवीषि त्वम् ? किमावयोर्विवाहः स्थगनमर्हति ?" हेमा प्रपृच्छत् ।

"कीदृशो विवाहः ? मया तु नेष्यते किमपि तादृशं बन्धनम् । परिहास-जल्पितं तु सर्वथैव विस्मरणीयं त्वया । अस्तु । महाविद्यालये मिलिष्याव आवाम् ।" इति कथयित्वा निरेगा सा गृहान्तः ।

हेमाया वचोभिस्तु विजयस्य हृदयं विदीर्णमिव सञ्जातम् । यस्या कृते स स्वजननीमपि तिरश्चकार, सा तु प्रस्तर प्रतिमेव बाह्यं सौन्दर्यमेव धत्ते । तदन्तस्तु हृन्नाम्ना हृदीकेन स्फुरणमपि न विधीयते इत्येव सम्प्रधारित भग्नमानसेन विजयेन । किन्तु अद्यैव निर्णयो जात इति कृत्वा स कथमपि किमपि धैर्यमङ्गीचकार । न कोऽपि लाभस्तत्र स्थितेनेति सञ्चिन्त्य स स्वगृहाभिमुखं प्रतस्थे ।

× × × × ×

गृहद्वार तु तथैवाऽनावृतमासीद् यथा तेन त्यक्तम् । एतद् दृष्टवा स कयाऽप्यनिष्टाऽऽशङ्कया विचलित इव समजायत । ततश्च स त्वरितगत्या गृहान्तः प्राविशत् । स्वकक्षमधिशयाना जननी सदश्य तदीया प्राणास्तु प्रतिनिवर्तिता इव सञ्जाता ।

परं तज्जननी तु निश्चेतनेवाऽऽसीत् । पुत्रेणाऽऽकारितापि सा प्रत्युत्तरं नाऽददात् । ततस्तु त्वरमाणेन तेन मातुर्हस्त नाडिका संस्पृष्टा । किञ्चित्कालं तु स किमपि स्पन्दनं नाऽन्वबभूव, परं शनैः शनैः नाडिकायाः स्पन्दनाऽऽभासः स्फुटतामापेदे । एतेन खलु समाश्वस्तोऽपि स दूरभाषेण पारिवारिकं चिकित्सकमुदाजहार सद्य एव समागन्तुम् ।

चिकित्सकेन नाऽधिको विलम्बः कृतः परं तदन्तरे विजयस्तु मातृचिन्तया भृशमव्यथत । तदङ्गानि च यदा कदा प्रकम्पनमिवादधुः । निश्चितरूपेण न जीविष्यति स मातरि दिवङ्गतायां मंस्यामि । तु स्पष्टमेव प्रतीयते स्म ।

एतदन्तरे चिकित्सकः समाजगाम तत्र । तेन तु हृदयपरीक्षण यन्त्रेण रुग्णहृदयमचिरादेव परीक्षितम् । ततस्तु कोऽप्यौषधोपचारस्तेन प्रारब्धः । प्रथमं तु स किमपि द्रवौषधं हस्तनाडिकायां निचिक्षेप । तदनन्तरं च तेन किमपि हृदयसंवाहनं विहितं । रुग्णाया प्रतिक्रिया च दृष्टवा स नितरामतुष्यत् । ततस्तु विजयं यथोचित निर्दिश्य निर्गतः सः ।

किञ्चित्कालानन्तरं जनन्या पार्श्वपरिवर्तनं विधाय स्वनयने समुन्मीलिते । स्वपुत्रं च पार्श्वे स्थितं समालोक्य सा प्रमुदितेव सञ्जाता । विजयस्तु मातुश्चरणयोऽवनतः क्षमामेव याचते स्म ।



# स्वीकृता

डॉ० नन्दकिशोर गौतम् 'निर्मल'

व्यतीतोऽयं निशीथकालः । विभावरी चन्द्रं द्रष्टुं समुत्सुका । निशाकरेण निजकरैः रजनीनायिकायास्तमोऽवगुण्ठनमपाकृतम् । स्वप्नभावनाभिश्चिन्तितो दामोदरः सहसैव जागृतः । चन्द्रेण मिलिता रजनी विलोक्य तस्य हृदये स्वप्नं साकारं कर्तुं लालसा जाता । "हे निशानाथ ! कदा तद्दिनमागमिष्यति यदा मम निर्धनस्य कन्यापि निजवरेण स्वीकृता भविता ।" उक्तं मनसि तेन । स शय्यामुपतिष्ठत् । मनसि महद्दुःखभारमनुभवन् चिन्ताजालमापतितोऽयं पर्याकुलोऽभूत् । निशा धूसरा जाता । उषानागरी समागता । स्नानादिकं कृत्वा, पाथेयं नीत्वा आत्मजायै वरमन्वेष्टुं नगरान्तरं प्राचलत् सः ।

देवदासेन पूर्वमेव प्रबोधितः स इन्द्रपुरीमवाप्य धनाढ्यं सुरेन्द्रमुपागमत् । भव्यं प्रासादं विलोक्य तेन कल्पना कृता "कियत् सौभाग्यं मे बालायाः राधायाश्चेत् गृहस्यास्य गृहिणी सा स्यात्" किन्तु निर्धनतया तेन चिन्तितं यत् इयं सुकल्पना, न कदापि सत्यं भवितुमर्हति । पुनरप्यन्तर्मनसा स साहसं कृत्वा अजिरे स्थित्वा सुरेन्द्रमहाभाग ! सुरेन्द्रमहाभाग ! इति वारद्वयमाकारयत् । सुरेन्द्रोऽपि अजिरे भद्रपुरुषं विलोक्य नमस्कृत्य पृष्टवान् "कुतः समागताः श्रीमन्तः ?

दामोदर — उज्जयिनीतः ।

सुरेन्द्र — कथ्यतां कथं समागमनं भवताम् ?

दामोदर — श्रेष्ठिवरदेवदासेन प्रेषितोऽयं नन्दनात्मजो दामोदरः । श्रीमतां दर्शनार्थ-मत्रसम्प्राप्तः ।

"अहा ! हा ! हा ! देवदासस्तु अस्माकं परममित्रमस्ति । इति उक्त्वा सोऽजिरमुपगम्य दामोदरस्य करं करेण गृहीत्वा निजातिथिकक्षं नयति । किञ्चित्-कालं वार्तालापानन्तरं दामोदरः पृच्छति "श्रीमतां सुपुत्रस्तु अत्रैव स्यात् ?" "नहि नहि आयुर्विज्ञानशिक्षाप्राप्त्यै स तु भूपालनगरे वर्तते, चित्रं द्रष्टुमर्हन्ति भवन्तः ।"

किञ्चित्कालानन्तरं सुरेन्द्रेण उपायनत्वेन दशसहस्रमुद्राणां प्रस्तावः प्रस्तुतः । दामोदरस्यानुनयेन दीनभावं च विलोक्य सप्तसहस्रमुद्राः स्वीकर्तुं प्रसन्नोऽभूत् । दामोदरस्तु तस्मिन्नेव काले पण्डितवरं समाहूय विवाहार्थं दिनं निश्चितवान् । यद्यपि दामोदरो धनाभावेन ग्रस्त आसीत् किन्तु निजकन्यायाः मङ्गलाय स मनसि निर्धारयामास यत् भवतु नाम मम गृहस्य विक्रयः परन्तु राधायाः विवाहं शोभनं करिष्यामि यतो हि राधैव तु मम एकमात्रसन्ततिः ।

दामोदरो वरयात्रागमनात् पूर्वमेव निजगृहं न्यासीकृत्य पञ्चसहस्रमुद्राः प्राप्तवान्, परं दौर्भाग्येन विवाहदिनात् पूर्वस्मिन् दिवसे तद् धनं चौरैरपहृतम् । तथापि दामोदरो धैर्यं न त्यक्तवान् तस्य मस्तिष्के विचारोऽप्यत्र समुद्भूतम् किन्तु पुनः धैर्यं समालम्ब्य तेन निश्चितं यत् विवाहानन्तरं सर्वं समाधास्यामि । वरयात्रा तस्य द्वारं समागता परं तेन न कस्मै अपि निजहृदयस्य वार्ताभिहिता । वरपक्षजनैः सानन्देन भोजनं कृतम् । सर्वाणि औपचारिकमङ्गलाचाराण्यपि जातानि । सप्तपदीयकाले सन्निकटं विलोक्य सुरेन्द्रो दामोदरं जगाद 'दामोदर महोदय ! स्ववचनं पालय ।'

दामोदर — नूनमेव वचनं परिपालयिष्यामि मङ्गलविधानानन्तरम् ।

सुरेन्द्र — (क्रोधदृष्ट्या विलोक्य) दामोदर ! वचनं परिपालय । समयः सञ्जातः ।

दामोदरो दीनवचसा उवाच 'महोदय ! ह्यो मम गृहात् उपायनराशिः चौरैरपहृतः ।' इमानि वचांसि श्रुत्वा सुरेन्द्र एवं क्रोधाविष्टो भूत् यत् वधूं तत्रैव त्यक्त्वा निजावासं प्रत्यावर्तत । दामोदरोऽनया घटनया सन्तापमनुभूय पञ्चत्वं गतः । दामोदरस्य स्वर्गवासेन राधायास्तस्याः जनन्याश्च हृदये विदीर्णे । किञ्चित् कालानन्तरं उपायनराशिग्राही श्रेष्ठिना न्यासीकृतं गृहम् अधिकृतम् । अधुना राधा तस्याः जननी च निजगृहं त्यक्त्वा अपरस्थाने निवसतः स्म । राधाजनन्या धनस्य अभावे कस्यचित् श्रेष्ठिनः पाचकवृत्त्याः कार्यं स्वीकृतम् । एकदा राधाजननी रुग्णा जाता, तदा तया स्वस्थाने निजात्मजा राधा पाकसेवायै प्रेषिता ।

विवशतया राधा श्रेष्ठिगृहं गतवती किन्तु नवयौवनां राधां विलोक्य श्रेष्ठिनः मनसि दुर्विचारः जातः । श्रेष्ठी राधामनुचितदृष्ट्या दृष्टवान् परन्तु राधया तद्मर्म अभिज्ञातम् । अवसरं च दृष्ट्वा सा मौनभावं नयेव पलायिता । गृहमुपागत्य सर्वं मात्रे निवेदितं तया । राधाजननी विपत्तिकाले विलोक्य निश्चितवती यत् राधा कदापि श्वसुरालयं गच्छेदिति । सान्त्वनवाक्यैः सा राधामुक्तवती श्वसुरालये यथा त्वं तत्रैव कथमपि स्थानं स्यात् । माता साकं सा श्वसुरालयमुपागतवती परं सुरेन्द्रेण सा न स्वीकृतवान् । राधाजननी तु कानिचित् दिनानि यापनीय अनन्त

महद्दुःखेन पतिमार्गम् अगमत् ।

इदानीं अगदिव श्रीपणतर आत राधायै । तया जीवनयापनाय स्मृतिकार्यं प्रारब्धम् परन्तु दुष्टयुवकानां दुराचरणात् तस्यास्तत्र निवसनमसम्भवं जातम् । राधा तत् स्थानं विवशतया त्यक्त्वा निराश्रिता च भूत्वा लक्ष्यहीनेव अचलत् । सम्मुखमेव रेलयन्त्रीं प्राप्य विना विचारेणैव सा प्रथमश्रेणिकक्षमुपातिष्ठत् । किञ्चित्कालानन्तरमेव यात्राप्रमाणपत्रनिरीक्षकः समागतः । सः राधां यात्राप्रमाणपत्रं दर्शयितुं पृष्टवान् ।

मृगीव भयभीता राधा अवरुद्धकण्ठेन रुरोद । राधायाः करुणावस्थां दृष्ट्वा सम्मुखासीनस्य युवकस्य हृदयं करुणाप्लावितम् । दयार्द्रेण तेन तस्यै बालायै क्रीतमेकं यात्राप्रमाणपत्रं निरीक्षकात् । ततः परं स तां पृष्टवान् कुत आयाति भवती ? कुत्र च गमिष्यति ? कथं च यात्राप्रमाणपत्रं न नीतं भवत्या ? परन्तु अबलया तया न किमपि प्रत्युत्तरं दत्तम् अपितु अवरोधानन्तरमपि तस्याः नेत्रयोर्बाष्पाम्बुधारा प्रवहति ।

सहसैव युवकस्य दृष्टिः राधायाः मुद्रिकायामतिष्ठत् । मुद्रिका सा अभिज्ञाता । चिन्तितं तेन यदा यत् इयं मुद्रिका तु मया भार्यायै समर्पितासीत् । साहसं कृत्वा स पृष्टवान् 'अपि भवती राधा ?' इत्येव सा चकितवती उवाच' कथं भवद्भिर्ज्ञातं यदहं राधास्मीति ? युवकोऽपि जगाद 'अङ्गुलीयकमिदं कथयति । कुत्र तव पितरौ ?'

राधा — उभौ तौ स्वर्गं गतौ । अनाथाहमेव दारुणेऽस्मिन् संसारे जीविता ।

शनैः शनैः सा सर्वां कथां तस्मै श्रावयामास ।

युवक — वैक्लव्यं मा स्म गमः इन्द्रपुरीवास्तव्य सुरेन्द्रनाम्नः सुतः अमरनाथोऽस्मि ।

राधा चकितचकिता भूत्वा लज्जया अवनमिता । सजलनेत्राभ्यां तया पृष्टम्" कस्मात् कारणात् गृहं गच्छति भवान् ?

अमरनाथ — जनकात् पत्रं प्राप्तम् । तेषां स्वास्थ्यं नास्ति समीचीनम् । चल त्वमपि मया सह पितृपादसेवायाम् ।

राधया मन्ये पुनर्जीवनं प्राप्तम् । स्वामिनः औदार्यं प्राप्य सा सनाथवती । गृहं गत्वा तया हृदयेन एतादृशी श्वसुरसेवा कृता यया तस्य हृदयमपि परिवर्तितम् । वृद्धावस्थायाः कारणात् सुरेन्द्रः दिवं गतः परम् अमरनाथेन सार्धं राधा तु जगत्यस्मिन् सुखमनुभवति ।



# राष्ट्रनिर्माता

ईश्वरानन्द शर्मा

जनार्दनोऽवसरप्राप्ताध्यापकोऽस्ति। जीवनस्य महान् भागः शिक्षणकार्ये एव सोऽतिवाहितवान्। मण्डलस्य कापि शिक्षणसंस्था नासीद् यत्र तस्य सहयोगादिकं न भवेत्।

जीवनस्य सन्ध्यायां वर्तमानस्य तस्य सुखं विनाऽस्य सत्कारान् प्रति सहानुभूतिप्रदर्शनमन्तरा कोऽपि न तिष्ठेत्। ग्रामस्य मुख्यभागे तस्य जीर्णशीर्णं पैतृकमपक्वगृहमभवत्। जरसाभिभूतोऽवसरप्राप्तवेतनः स तस्मिन्नेव निवसति। कामना तु तस्य आसीद् यत्तस्य स्थाने पक्वेष्टकाचितं चतुरस्रं गृहं निर्मितं भवेत् किन्तु कामना कामनैवास्थात्।

गृहस्य बहिर्वेदिकायां निम्बवृक्षस्याधस्तात् तस्य मृत्पृष्ठं निधाय स आसीनमतिष्ठत्। सम्प्रति वार्धक्यपरिवर्तितो जातः। यौवने यदगात् कृष्णमुरणीपर्यधात्, तस्य स्थाने समुज्ज्वलश्मश्रुनिर्मितं तदाननमास्ते। यत्र तस्य शुक्लश्वेतशिरःकेशाः स्पष्टं द्रष्टुं पार्यन्ते। धौतवसनपरिधानादिकं तत्रवासीत् किन्तु तस्य प्रशान्तस्य मुखे त्वरया नागच्छति। तदविचलस्य शिक्षकस्य हतभाग्यस्य कथा पूर्णिमास्यानु कथमपि नो सङ्कुचति। अत्र ग्रामे तदध्यापिता बहवो युवानः सन्ति। ते कापि गतिमार्गात् च ब्रुवाणाः 'गुरुवर्य! प्रणामाः' इति वदन्ति तदा स स्वकीये निमीलिते नेत्रे उन्मील्य आशान्वितेन चक्षुषा पश्यति, किन्तु तदन्तरमागन्तुकः दूरं एव प्रयाति।

ग्रामस्य स्थविरो ग्रामणी, यः तस्य बालसहाध्यायी समभवत् यदा कदा तस्य समीपे तिष्ठति। स प्रतिभावता यवनत्वोच्चपदासीनानां स्वकीयच्छात्राणां कथानकं सोत्साहमाख्याति। तत्प्रसङ्गे स सोच्छ्वासं भाषमाणोऽब्रूयत "यद्गुरुर्गुरुर्होऽन्यस्य शिष्यः शक्रतामितः"। किन्तु तदा स्वनिर्मातारमेव व्यस्मरत्।

रविरस्तङ्गतः। ग्रामे यातायातमारब्धम्। दिवाकरः समक्षं दूरतः विगतपर्वतमासाद्य। शिखरस्थापरपारं प्रयान दृश्यते। यामिनी पश्चिमादाय

भित्तिग्राहमागता । 'किमद्यापि पत्रवाहकः नागतः' द्वाराभिमुखं पृष्ठं विधाय स्थितं स्वपतिमवलोक्य सावोचत्

जनार्दनस्तिमिरे नेत्रे पतल्य न जाने किमन्वेषमाण आसीत् । तेन यामिनी वार्ता न श्रुता भवेत्, यदि श्रुतापि तदा तदुत्तरितुमुचितं नामन्यत । तन्मुखं पूर्वतोऽपि भृशं श्यामायमानं जातमास्ते । यामिनी तस्मादपि शङ्किता सती कम्पमिव जनि । सा सन्ध्यायाः धूमिलान्धकारे स्वपतेः दिशि करुणापूर्णानिमिषं ध्यानपरायणा सती निरीक्षमाणाऽभवत् । यौवने मुखमिदं कीदृशं प्रभासमानमासीत् । यदाहं परिणीय पत्युः सदनमागताऽभवम् ।' अद्य सर्वं कायं कङ्कालास्थि पञ्जरात्मकं एवावलोक्यते । तस्याः ध्यानं वस्त्रवलाद् बहिर्निर्गतहस्तयोरुपरि गतम् । पादौ जानुनी, कपोलौ पूर्वं नतोन्नतविशिष्टौ मांसस्थाने वलितं चर्मैव प्रतिभाति । दश्यमानानि वस्त्राणि केवलानि अस्थीनि गोचरीभवन्ति । स्वपतिं दृष्ट्वा यामिनीलोचनाभ्यामश्रूणि प्रावहन्त धर्मे दिलीपदाञ्चलं सितम् । सा मौनमवलम्ब्यैव प्रतिनिवृत्ता । यष्टिध्वनिना जनार्दनस्य ध्यानं भग्नम् । धर्मपत्नीं दृष्ट्वा नेत्रयोस्तत्र गहनं प्रवृत्तम् । स तां निरीक्ष्य मुद्रितनेत्र एवोचे । त्वया किमपि भणितमासीत् ?

साश्रुकण्ठा मनो परावृत्य चक्षुभ्याँ निपेधं विधाय चिन्तितोदासीनमुद्रायामेव शिरोऽकम्पयत् ।

जया नागता किम् ? सो वोचत भवान् द्वारि तिष्ठति । सा इतएवागमिष्यति । धर्मपत्नी शनैरवदत् ।

भाम विस्मृतम् ? सा कथं नागता ? घनान्धकारे तस्याः अनागतिः चिन्ताया विषय इति पिता जगाद ।

चिन्तामापन्नः स क्षणेक्षणे वर्धमानान्धकारे पश्चिमायां दिशि दत्तदृष्टिरतिष्ठत् । सान्द्रे तमसि द्विहस्तदूरस्थमपि वस्तु द्रष्टुं न शक्यते । यामिनी यथागता तथैव निजगाम ।

नागता जयेति विपश्यन् जनार्दनः दीर्घं निश्श्वासं तत्याज । स्वकीयाऽऽथिक्यदशया स भृशं विव्यथे । सोऽचिन्तयत्—

समाजं जीवनपर्यन्तं सेवमानस्य मम कृते स किमकरोत् ? मह्यं राष्ट्रनिर्मातुः दीयमानं पदमुपहासास्पदमिव प्रतिभाति । मम शिष्याः सर्वक्षेत्रेषु कर्मसम्पृक्ताः सन्ति । परन्तैरपि किमहं कदापि संस्मृतः ? पुरस्काररूपे अवकाशप्राप्तवेतनं शतमात्रमुपकल्पितमेवाहम् ? समाजस्य दृष्टौ मदीयमूल्यमेतावदेव ।

अतीताध्यापकजीवनस्य स्मृत्या तस्य समग्रं शरीरं रोमाञ्चितं जातम् ।

जीवनसंकटं वर्धं वर्धमापद्यानिम। सर्वदैवाधिकं वृद्धमेवानुस्मरा। पैतृजीवनं मारब्धम् नताशोऽनि व जाता। यदा पूर्वपुरुषोपार्जितं दायभागे प्राप्तं तस्य पुनरुद्धारायापि नैव सामर्थ्यम्? तथैव भग्नावशेषं सम्प्रति अस्फोटरवाक्रन्दितेन मयापश्न? मममध्यापनव्यवसाय कापि सम्मानदृष्ट्या नैवापश्यन्। भृति प्रसंगेन राष्ट्रनिर्माण कर्मणि सवात्मनासमादृत एवाभवम। सम्प्रति स्वग्रामेऽस्मिन् अपरिचित इव आपतितोऽस्मि। मया मम कस्यापि सहानुभूति प्रेमचापि नोपरीवर्तिता। विमृश्य मया प्रस्तुता यामिनी जीवनस्य यात्राया विश्लेषणं सामान्यकष्टमवान्वभवत्। कदापि कुर्जिनदारावपात्दर नो पूर्णम। तस्या अश्रुभि सिक्तं नेत्रं विलोक्य मम धैर्यस्य सीमा न तिष्ठति। बाधकस्यैव नेष यथा जीवन विषमयमेवाभवत्। भोजनाच्छादनयोरुचितापि व्यवस्था नैवजाता। सहधर्मिणी भूषापि सा मामा-भूषणवसनादिसम्भारमयी कदापि नायाचत। सा नोऽज्ञानात स्वादिष्ठं मधुरं भोजनं किम भवति। शोभनानि च परिधानानि कानि भवंति। मामात्म वदनं प्रेक्ष्य सान्त्वनं नेत्रवारि प्रमृज्य स्वगृहकार्ये सर्वदैवाऽऽसक्तानिष्टत। त्यागस्य तपसश्च किं फलं जातम्? इतिमर्दं मा पाकलय स्थिता सती तया राष्ट्रनिर्माता चाप्येव निस्सरणादपस्थाधस्तात चरिकाया जीर्णशीर्णस्तरणमासीत समस्तविच्छिन्नहरितास्या वनितानि क्षत्राणि निरीक्षमाणा एवासीत।

तस्याध्यापकस्यान्ते वयस्या विविधप्रकाराव कुर्वाणा सदृशाऽधिक स्थिरा प्रमोदनाना अवलोकते। नेपाराहदधनधाय सुवर्णविधाभि परिपूर्णराशौ जीविते। वृद्ध शिशस्तु गमनया चतुर्दिशनिरीक्षन किंतु सर्वत्र भयङ्करतैवतावयन। व्यवसायस्यास्य कारणात् सर्वैवं वास्योत्सवावनिष्ट। जीवनस्य थान्त्या, निष्क्रियतया सह शरीरमपि माहात्म्य ना विदधाति। जीवनगत्यायां निर्धनतया, पराधीनतया, व्याधिना च पूर्णत प्रतिबद्धोऽस्ति, यत विशृष्टे कोऽप्युपायोनो-दृश्यत। अशावधित्र राष्ट्रनिर्माणकाय फनाभाव विडम्बनैव प्रतीयत। अस्याम-वस्थायामपि तेन स्वकर्तव्य सुचारुरूपेण परिपालितम्। देशनृभि समाचारपत्रे जननायकैश्च राष्ट्रनिर्माता स्वमस्तकस्य गर्वोन्नत मानमस्मृत्यूर्ममिव जातम, किंतु तस्य तत्र स्वकीय धिक्पतनस्यध्यानमवापारतमासीत।

सहसा देहे कम्पानुभूतिरभवत्। जीर्णकम्बल शरीरादपगतम। छिन्न भिन्नवसनमपहाय शीतलसमीर बाण इव कायान्त प्रविशति। तदैवजयाऽऽयाती-दृश्य। सैव जीवनस्य महती तस्याशा। वृद्धतायां आधार एकान्ततोऽवशिष्टा। सा काष्ठभार शिरसि कृत्वा तमसि त्वरयाऽग्रपाश्वे विचिन्वती समीपमागतातस्य। गगनस्य विधायापि तस्या मुखमवलोकितु नशेरे। सर्वैरमागन्तानमवशिष्टा।

मन्येमा तस्य जीवनमेवाऽसीत् । तनूजाऽभावग्रस्ता सती यौवन एव वार्धकमनुभवन्ती प्रतिभाति । तस्याः पाणिग्रहणं कोऽपि युवावरोनो कामयते । कन्यामन्तरेणापरं तत्रकिमासादनीयं भवेत् ? दायजे किमपिधन दातु जनार्दनस्यसामर्थ्यमेव नासीत् । निर्धनस्य कन्यां क परिणयेत ? जया स्वपितु दारिद्र्यं परिचिनोति । सा स्वयं वनगत्वा छित्वा च काष्ठानिगृह्य समानयत ।

काष्ठभारं प्राङ्गणे धृत्वा बहि स्थितपितरं विलोक्य चिन्तामापेदे "यदस्य सेवा कथं कुर्याम् ।" न कोऽपि मम पितरं परिचिनोति, किन्तु ममाराध्यदेवस्त्वयमेव । सा प्राङ्गणात् बहिर्वेदिकामागता, यत्र पिताऽर्धमूर्च्छितावस्थायामासीत् । त्वरया त सा कम्बलेनाच्छादितवती । आञ्चलेनाश्रूणिप्रमृज्य साऽवदत् । 'शैत्यं तु नो बाधते पितरम्" ? स तामश्रुमुखी चिरं स्नेहेन सकरुणमपश्यत् । पितुस्ता दशां द्रष्टुं सा नो शशाक । सा तत्कण्ठग्राहं तारस्वरेण रोदितुमारब्धवती ।

अन्धकारोघनीभूतोऽभवत् । निम्बतरोर्नीडेषु भीकरुणापरायणावभवताम् । मासान्तेविशेषतोदिनत्रयात् भोक्तु किमपि न प्राप्तम् ।

तस्य दृष्टि क्षितिजपारात् परावृत्य पुन पुन मार्गमायाति । सन्ध्यायां तिमिरं छाया महावृक्षपादपस्य पार्श्वे घनीभूताऽभवत् । तस्याशा समजनि । कोऽपि पदक्षेपोऽश्रावि । क्रमशो मानवाकृति दृशे । निराशासागरनिमग्नस्य वदने आशाभचरोऽभूत् । 'तनूजे ! पत्रवाहक एवासौ भवेदिति मन्दमवोचत् ।"

आशासे मन्धनादेशमानेष्यति । धान्याभावेन पाकरन्धानं शून्यप्रतीक्षते । अणिगापणं गत्वा भोज्यसामग्रीमानेष्यसि । अन्यथा विपणि पिधानं जनिष्यते । पितु वचांसिश्रुत्वा सा पुनर्जीवितेवाभवत् ।

द्विचक्र्या समुत्तीर्य पत्रवाहक सविनयमवोचत् । भवदर्थमेवाकाले तिमिरमये मयागतम् । एकदिवसस्यविलम्बेन गुरुवयस्य कदाचिदसौविध्य जायेत ।

"धन्योऽस्मि पुत्र ! धन्योऽस्मि । मया त्वं स्नेहेनपाठित । त्वया मम महती सेवा विधीयते । परेशस्तवमङ्गलं विदधातु" जनार्दन आशीर्मुद्रयाऽवदत् ।

अत्र हस्ताक्षराणि । "भगिनिजये ! वेतनद्रव्यगणने त्वया साहाय्यं विधेयम्" इति पत्रवाहकोविनयेन शालीनतयाविनिवेद्य तिरोदधे । हन्त ! कोदृशोऽयं राष्ट्रनिर्मातु पुरस्कार. ? जनार्दनो व्यथया कम्पमान पश्चाद्ददर्श । जया कस्मिंश्चिद्भावनालोके निमग्ना निम्बमहीरुहस्याश्रये स्थिताऽश्रुप्रवाहमुञ्चन्तीप्रस्तरायितासीत् ।

❁

## द्वौ शास्त्रिणौ

मनोहर शर्मा

पण्डितज्ञानचन्द्रशास्त्री कलकत्ता नगरस्य ब्राह्मणभवनात् निर्गत्य शीघ्र गच्छन्नासीत् । अद्य भोजन-निर्माणे तस्य कश्चन विलम्बो जात । श्रेष्ठिन आपणे दैनिक जप कर्तु तेन दूर गन्तव्यमासीत् । कलकत्तानगरे समागतस्य तस्य अधिकानि दिनानि न व्यतीतानि । तन्नगरस्य विभिन्नमार्गाणा तस्य सम्यक्तया परिज्ञानमपि नासीत् । गन्त्रिभि सह सघट्टनस्यापि भय तस्यासीत् । मार्गेच पर्याप्तो जनसम्मर्द । स कदाचित् केनापि सह सघट्टते चेत् परन्तु कस्यापि प्रतिघातो न स्यादिति पर्यालोचयन् त्वरया गच्छन्नासीत् ।

तत्र समागच्छन्नासीत् एको हृष्ट पुष्ट दीर्घश्मश्रुको विशालनेत्र पुरुष । स च मनसो मग्नतया मन्दमन्दमागच्छति स्म । जातस्तस्य घात प्रतिघातश्चपण्डितज्ञानचन्द्रेण सह । पण्डितस्तेन पतन्निवासीत् । तमनवलोकयन्नेव पण्डितोऽवादीत् "जना साम्प्रत सम्पन्ना अन्धा । न च पश्यन्ति इमे मनुष्यमपि परापतन्तम् ।" श्रुत्वा चैतत् पुरुषोऽसौ समवाप्य उत्तेजनामनब्रवीत् दृष्ट्वैवचल । इय कलकत्तानगरी । नाय स्वकीय प्रदेश । कदाचित् देहपातेन सह प्राणपरित्यागोऽपि सभाव्यतेऽत्र ।"

ज्ञानचन्द्रेण न श्रुता कदाचिदेतादृशी कठोरवाणी परन्तु किं कुर्यादसौ । भूमिरिय परकीया । तेन दत्ता दृष्टिस्तदुपरि । असावपि विरराम । जाता काचित् विचित्रानुभूति । मनोयोगेनापश्यदसौ त जनमवादीच्च "तव निवासस्थान किम् ?"

अपि नामासि त्व भानु ? "इदानी" तस्यापि जाता प्राचीना स्मृति । "ग्रामस्य नाम पश्चात् वक्ष्यामि । तावत् कथय त्व कदाचित् ज्ञान असि किम् ?" जातेदानीं ज्ञानचन्द्रस्यापि काचित स्मृति । स हि अवोचत् 'अरे भानो ?"

पश्चादुभावालिङ्गितावेवातिष्ठताम् । मार्गे गच्छन्तो लोका महता कौतूहलेन दृष्टवन्तो दृश्यमिदम् ।

श्रेष्ठिन आपणगमन विस्मृत ज्ञानचन्द्रेण । स्वबालमित्रस्य भानो हस्तो धृतस्तेन । भानुनापि मित्रस्य स्कन्धे हस्त धृत्वा ऊचे "कियान् कालो व्यतीतस्तदा-

भागमनस्य ? कुत्र च निहितो वासस्त्वया ?"

ज्ञानचन्द्रेणोक्तं "मासद्वयमतीतं मेऽत्रागतस्य। ब्राह्मणसदने मे वासः। श्रेष्ठिन मवाईमल्लस्यापणे मन्त्रजपार्थं गच्छन्नस्मि। एतदर्थं लभ्यन्ते त्रिंशत् रूप्यकाणि केवलं, यानि चात्र भोजनव्यये परिसमाप्तानि भवन्ति। नैतदतिरिक्तोऽपरोऽपि मत्पचनाय। न च कनापि परिचय एवास्ति। तव च कीदृश समाचार ?"

रामदुर्गपरित्यागादनन्तरमहमत्रैव निवसामि तथा श्रेष्ठिनः प्रतापमल्लस्य गृहे पाकक्रियां करोमीत्युक्तं भानुचन्द्रेण। प्रचलति सुचारुतया मे कार्यम्। सर्वप्रकारेण सानन्दोऽहम्। गुरूणा मदर्थमियमेव विद्या दत्ता, यस्या लभ्यते फलमिदानीम्। एतावदुक्त्वा हसित भानुचन्द्रेण। प्रत्युत्तरस्वरूप ज्ञानचन्द्रेणापि हसित्वोत्तरितम पाकशास्त्रीति ते नामापि सार्थकम्। ज्ञानशास्त्रीति मदीय नामधुना निरर्थकं सम्पन्नम्।"

"भानुनोक्त सर्वं साधु भविष्यति। भगवत्या कालिकाया क्षेत्रमिदम्। अत्रागताना मरणमप्यावेव करोति। धैर्यमवधार्य अवकाश कल्पयित्वा मेलिष्ये त्वया सह। इदानीं नास्त्यवकाशो मम। तथापि च जायते विलम्ब। परश्व द्विवादन समये ब्राह्मण सदन तवसकाशमायास्यामि, भविष्यति वार्तालाप सर्वस्मिन् विषये।"

उभौ स्वमार्गमनुसृतौ।

( २ )

रामदुर्गस्य संस्कृत-पाठशालायां सुदूरग्रामाणां विद्यार्थिनः प्रवेश्यन्ते। श्रेष्ठिन महाशयान् विकासस्य, भोजनस्य, वस्त्रस्य तथा पुस्तकाना कृते समीचीन प्रबन्ध। बालकास्तत्रैव वासं कुर्वन्ति पठन्ति च संस्कृतम्। ब्राह्मणस्त्वेकः पाचकस्तत्रासीत्। विद्यार्थिना कीदृशोऽपि व्ययो न भवति। अध्ययनेन सह तेषा पालन पोषणान्यपि भवन्त्यत्र।

पाठशालाया विद्यार्थिषु एक आसीत् ज्ञानचन्द्र अपरश्चभानुचन्द्र। पृथग् ग्रामवासिनावपि छात्रावासे एकस्मिन्नेव कक्षे निवसन्तौ उभौ घनिष्ठमित्रे आस्ताम्। ज्ञानचन्द्रः पठने यावान् तीव्र आसीत् तदीयो मित्र भानुस्तावानेव मन्द। एको नक्तंदिवम् अध्ययने रतस्त्वेदपरो भोजने शयने च प्रवीण आसीत्। ज्ञानचन्द्रेण भृशं प्रतिबोधितोऽपि तदीयः सुहृत् तथैवासीत्। तेनावगत यत् भानो भाग्यमेतादृशमेव। समयानुसार ज्ञानचन्द्रेणोत्तीर्णा शास्त्रिपरीक्षा किन्तु भानुचन्द्रेण प्रथमाया पर्वतोल्लंघन नैव कृतम्।

पाठशालाया वासं कुर्वता भानुचन्द्रेण समवाप्तस्त्वेको गुण। नैकवारं पाचकस्याभावे सर्वेषा छात्राणा कृतेतेनैव निर्मित भोजनम्। शनैः शनैरस्य विद्यायामसौ

प्रावीण्यमासादितवान्। अस्मिन् कर्मणि तदीय मनोऽतीव रमते स्म। अन्यापरमिद कारण यद् पावकस्यानुपस्थितौ घृतस्य शर्करायाश्चोपरि भानोरेवैकमात्रमधिकार.। एकान्तेऽसौ अस्यावसरस्य पूर्ण लाभ विन्दति। पाठशालाया पाकशास्त्रीति तदीय नवीन नामकरण विहितम्। श्रुत्वा चैतन्नाम भानुचद्रो नान्यथा मनुते।

अध्ययन परिसमाप्य ज्ञानचद्रो रामदुर्गं एव वासमकल्पयत्। विवाहानन्तर पितरावपि अत्रैवानीतौ तेन। श्रेष्ठिना तस्य वासार्थं स्थान दत्तम्। अत्रैव निर्मित तदीय गृहम्। नगरे पूजाया पाठस्य च कार्यारम्भो विहितस्तेन।

समयो व्यतीत। शास्त्रिण पत्नी क्रमश तिस्र कन्या सुषुवे। तस्य पितरौ पौत्रस्याननमनिरीक्ष्यैव स्वर्गतौ। शास्त्रिण प्रथमकन्या विवाहयोग्या सञ्जाता। तस्या विवाहे शास्त्रिण सम्पूर्णो धनराशिर्व्ययीभूत। यदा द्वितीया कन्या विवाहयोग्या जाता तदा शास्त्रिणावगत यद् अत्रनिवासेन कार्यं न चलिष्यति। यत्रकुत्रापि बहिर्गमनमेव वरम्। अन्ते शुभमुहूर्तं पर्यालोच्य कलकत्तानगरे ज्ञानचन्द्र कालिकाया शरणमवाप्य ब्राह्मण भवन वसनिमकल्पयत।

( ३ )

ज्ञानचद्रस्य स्वकीय बालमित्रम् भानुचन्द्रो यदाकदा स्मृतिपथमायाति स्म परन्तु अद्य तु क्षणे क्षणे तस्यैव प्रतीक्षा आसीत्। द्विवादनसमय। परन्तु नायात भानुरिदानीमपि। ज्ञानचन्द्र कदाचित् मार्गं परिपश्यति चेत् कदाचित् घटिकायं पश्चाद्ध पश्यति। ब्राह्मणभवने जना भोजनानतरम् विश्राम कुर्वाणा आसन्। कतिपयजना स्वग्रामचर्चाया लीना आसन्। तावदेव धमधम इति ध्वनिरश्रूयत। ज्ञानचन्द्र पश्चाद्ध त्यक्त्वा अग्रे आयात।

समागतस्तस्य बालसखा भानुचद्र। दृष्ट्वा त ज्ञानचन्द्रस्य नेत्रे आनंदनमत्कृते जाते। द्वे अपि मित्रे आसने अनिष्ठताम्। भानुना धूम्रवर्तिका प्रज्वाल्य एव वार प्रथम मित्रस्य पुरस्तात् कृता। ज्ञानचद्रस्य नाम्यासो धूम्रपानस्य तथापि यदाकदा नतापि धूम्रपान निषेधे एव। धूम्रवर्तिका नीत्वा तेनोक्त यत् अह बहुकालात् प्रतीक्षा कुर्वन्नासम्। मन्ये पाचनक्रियाया कार्याणि न पूरितानि स्यु।

भानुनोक्तम् 'पाकक्रिया तु समय एव पूर्णता गता परन्तु अह श्रेष्ठिन आपण गतवानास्म्। तत्र त्वदीय कार्यमपि पूर्णं करणीयमासीत्।' "श्रुत्वा चैतत् ज्ञानचद्र किञ्चिद् विहस्योक्तवान् "नाऽस्मात मदीयकार्यम्। कीदृशो भूत् वार्तालाप श्रेष्ठिना सह ?"

धूम्रवर्तिका पिबन् भानुरुवाच 'कालीमन्दिरे वायनोवयते। श्रेष्ठिनो गृह-

मन्दिरस्य पूजकः भूत्वा त्यक्त्वा स्वगृहं गतवान्। कश्चनापरोऽन्विष्यते तत्स्थाने। मया च तन्नामत्र भवदीयं नाम प्रस्तुतीकृतम्। 'पण्डितः साक्षात् कार्यं' इति तेनोक्तम्। कश्चन सज्जनः विद्वान् अपेक्ष्यते मया। केवलं विद्वत्तया नात्र प्रयोजनं किन्तु सज्जनताया अपि महती आवश्यकता। श्वः द्वादशवादने तस्याग्रे चलिष्याव। त्वया तत्र गन्तुं तत्परेण भाव्यम्।"

श्रुत्वा चैतत् ज्ञानचन्द्रः पुलकितो जातः किमपि समुचितं उत्तरं तस्य मनसि नायातम्। स्वमित्रस्य भानोः द्वारा स्वकीयभाग्य-भाण्डारं उद्घाटितं इव प्रतीतिपथमागतं। उदारः प्रपूर्ण-शर्करापात्रमानीतं तेन एकवारमेव पीतं तन्मुहूर्ते।

"परस्परं मिलितयोरावयोः व्यतीतो युगः। कियन्तः सन्ति बालाः वत्साश्च ते" इत्यपृच्छत् भानुः। तत ज्ञानचन्द्रः स्वकीया पूर्णा रामकथा मित्रपुरस्तात् कथितवान्। तेनापि मित्रस्य सम्मुखं स्वकीयं निखिलमितिवृत्तं प्रकाशितम्।

इदानीं वार्तासमयः समापन्नः। अतः भानुः उत्थाय चलितः। तेन सह किंचित् दूरं गत्वा ज्ञानचन्द्रः परावृत्तः। अधुना पञ्चाङ्गस्याक्षराणि प्रकाशपूर्णानीव तस्य प्रतीयन्ते, स्वग्रहनक्षत्राणि उच्चस्थानेषु विराजमानानीव अदृश्यन्त। स मनसा कालिकां मातरं अस्मरत्, अवोचच्च— मातः! इदानीं मम लज्जा तव हस्तेनिहिता।'

( ४ )

परेद्युः भानुचन्द्रः स्वमित्रं ज्ञानचन्द्रं महतः विदुषः वेशं धारयित्वा श्रेष्ठिनः प्रतापमल्लस्याग्रे प्रापितवान्। ज्ञानचन्द्रस्य स्थूलं अङ्गवस्त्रमासीत् तदुपरि धृतानि दुग्ध-धवलानि वस्त्राणि। तस्य पादयोः काष्ठपादुके, ललाटे चन्दनतिलकं, गले द्रुक्षम्, शिरसि च केशरवर्णस्य उष्णीषं सुशोभितमासीत्। श्रेष्ठीतु स्वयं अपठितोऽप्यासीत् महाननुभवी। तेन पण्डितो ज्ञानचन्द्रः सादरं दृष्टः उच्चासने उपवेशितश्च। भानुनापि इदानीं धृतो विप्रवेशः न प्रतीयते अधुना पाचकः।

सर्वप्रथमं श्रेष्ठिना ज्ञानचन्द्रस्य पुरस्तात् स्वीया जन्मपत्रिका प्रस्तुतीकृता। तस्य ग्रह-नक्षत्राणि स्वयमेव उच्चस्थानस्थितान्यासन् तथापि पण्डितेन ततोऽप्यधिकं तदीयं फलं प्रकाशितम्। ततः श्रेष्ठिनः प्रफुल्लता स्वाभाविकी तेन पण्डितज्ञानचन्द्रस्य ग्रामस्य गृहस्य च विषये पृष्टाः केचन प्रश्नाः। तदुत्तरं श्रुत्वा ततोऽप्यधिका प्रसन्नता सञ्जाता, यत् श्रेष्ठिनः जन्मस्थानात् नातिदूरमासीत् पण्डितस्य ग्रामः।

पण्डितवरेण श्राविता केचन श्लोकाः, मधुरस्वरेण, केचन कथा-प्रसंगा अपि व्याख्यासहिता प्रस्तुतीकृताः। महैवानेन स्वकीयं शास्त्रिपरीक्षाप्रमाणपत्रमपि तत्र प्रस्तुतीकृतम्। श्रेष्ठिनः गृहमन्दिरस्य पूर्व-पूजकः नासीत् परीक्षोत्तीर्णः। वर्तमानपण्डितस्य

तु इव विशयनासीत ।

इव आरम्भैव भवता पूजागृह निभालनीयमिति ज्ञानचन्द्र श्रेष्ठिना प्रोक्त । वेतनादि विषये तु भानुचन्द्रेण सर्वसूचना पूर्वमेव दत्ता । भानुनोक्तम्- "अत्रयानि सर्वाणि कार्याणि पण्डितस्य रोचन्ते । इमे तु स्वकीया एव सन्ति ।" इमे भगवत सेवा कुर्युं , अस्मदस्मसाशीर्वादञ्च दद्य् रित्यवोचत श्रेष्ठी । इत्याकर्ण्य पण्डितज्ञानचन्द्रेण तत्क्षणमेव देववाणयामाशीववचनानि मधुरस्वरेण प्रगीय दत्तानि । तेन आह्लादित श्रेष्ठिवर पण्डितप्रवराणा चरणस्पर्शं कृतवान् । तदनतर द्वावपि सुहृदौ प्रसन्नचित्तौ भूत्वा परावृत्तौ । मार्गे भानुना कथितम — ' इव भूयो मन्त्रयकस्यैव अस्ति तथाप्यनेन सह निवास- भोजनादिकस्यापि शोभना व्यवस्था वनने । समये समये दान दक्षिणादिकपपि अत्रोपलभ्यते । स्वकन्याया विवाहावसरे इद सर्वं स्वयमेव प्रकाशित भविष्यति ।"

पण्डितज्ञानचन्द्रस्य मुखात् कीदृशोऽपि शब्दो न निसृत किन्तु असौ कृतज्ञतापूर्दृष्ट्या मित्रमुखमालोकितवान् ।

( ५ )

अपरेद्यु पण्डित ज्ञानचन्द्रेण श्रेष्ठिन पूजागृह विधिपूर्वकम व्यवस्थापितम । सर्वं पूजाविधान यथाविधि सम्पन्नम् । पूजाकाले तन मधुरकण्ठस्वरेण गीता श्लोका सम्पूर्णं श्रेष्ठिभवन गुञ्जायमानमकुर्वन । श्रेष्ठिन महिलावर्गं वान- समुदायश्च प्रमुदितो जात । अस्मिन्नवसरे भानुमहाराजन समीचीन पूजक आनीत इति सर्वैर्व्याहृतम् श्रेष्ठि परिवारस्य सर्वे सदस्या पूजागृहमगत्य भगवतश्चरणामृतञ्च पीत्वा परावृत्ता । तदनतर ज्ञानचन्द्र मौन धृत्वा जपकर्मणि निरत ।

दशवादन-समय भोजन सन्नद्धम् । भगवत भोगार्थं भोजन पात्रमादाय भानु पूजागृह प्रविष्ट । अद्यतनी भोजन सामग्री विशिष्टैवासीत् । पाकशालाया यत किमपि निर्मीयते तत्सर्वं भगवते समर्प्यते । भानुनोक्तम्— ' भो शास्त्रिन् ! भगवते समर्प्य पश्चात् भवता भोक्तव्यमिदम् । तदनन्तरमेव श्रेष्ठिवर प्रसादरूपेण भोजन करिष्यति । कार्यालय गमनवेला निकटा वर्तते ।"

दृष्ट्वा भोजनपात्र पण्डितज्ञानचन्द्रेण- तण्डुलम द्विदलम, प्रचुरघृतस्निग्धा करपट्टिका नैकविधा शाका नवा सुरभिणा पूरकस्य मुख जलविलीन जातम् । तदनुमान यत् भानो भीमकलेवरत्वस्य इदमेव कारणम् ।

भोजनपात्र समर्प्य भानुनोक्तम्— शास्त्रिन् ! नाह त्वादृश पठित ।

यदि अहमपि पठितुं असक्ष्यम्, तदा त्वादृश एव पण्डितपदं प्राप्तुं शक्नुयाम् । इदानीं मया पाकशालैव सव्यते ।" शास्त्रिणा तत्क्षणमेवोत्तरितम्— "भ्रातः ! तव पाकशालैव मां पण्डितमकरोत् अन्यथा मम विद्या व्यर्थैव स्यात् ।"

भानुः निगदितवान्— "इदं कालिकाक्षेत्रम्, सैव सर्वान् पालयति । अहमपि तस्या एव शरणं प्रपन्नः ।"



भृत्य नियुक्त । स तम्प्रति भूयः कृतज्ञ' स्नेह वात्सल्य वा वितरति । येन दीपकस्य किञ्चिदल्पकुकनेशमपिविचिन्त्याति चिन्ताशमपि तुदत्यल्पबाधापि बाधते । स तत्मलयति दीपकं पुत्रवत् । दीपकोऽपि यदा कदा तस्मै सर्वमेव गुह्य निवेदयति, तस्माच्च यथोचितपरामर्शमप्यपेक्षते स्म । अथ पुनरपि दीपक' खिन्नउद्विग्नस्तेन पृष्ट —'भाव अथतु इति प्रत्युत्तरय प्रतीक्षमाणे स्थिते तस्मिन् दीपकस्यमस्तिष्के एका विचारशृङ्खला चलचित्रमिव क्रमश' पुरस्तान्निर्गता ।'

दीपकस्य जनको बाबू कृष्णकान्तोऽद्यत दशाब्दपूर्व स्वात्मजायैका सुमनोहरा सच्चरित्रामधीतशास्त्रा मृदुगामिनी, मृदुभाषिणी, काव्यकला सगीतप्रियामुच्चकुलोत्पन्ना सुकन्या चितवान् । 'न मानवीयल्लप्सरैव स्वर्गस्थे' ति यदोक्तवन्त जनास्तदा रमा दीपकस्य माता थूत्कार करोतिस्म तदशुभदर्शनमपमारयितुम् । न पतत कुदृष्टि कस्यापि पतिनस्येति विचिन्त्य सर्वे परेषा कुदृष्टिमवरोद्धुम् यततेस्म । दीपकस्य तु तस्याम् ज्योतिशलभयोरिव, चक्रवाकयोरिव, राधाकृष्णयोरिव सीतारामयो रिव शकुन्तलादुष्यन्तयोरिव च प्रीतिरासीत् । एम ए इत्युपाध्युपेता सा न केवल सस्कृतसाहित्ये प्रवीणैवासीदपितु तस्या व्यवहारेऽपि सम्कृत-साहित्य समाहितम् । भारतीय-सस्कृते साक्षान्मूर्तिरिवासीत्सा । स्वश्वश्रू मातरमिव भगवन्तमिव भर्तारञ्चामन्यत ।

नूतनोपन्यासा तथैव तस्मै रोचन्ते यथा प्राचीनग्रन्था । भारतीया प्राचीन सस्कृति प्रन्यास्योपेनापि सा नासीदनघहद्विग्रस्ता । दीपकोऽपि गोष्ठ्य पर्यन्त साहित्यसमागमे नासीदनुरक्त स एवाधुना साहित्यिवी वार्तामारब्धुमैकश्रद्धश्रृणोच्च मनोयोगेन, यथा मधपोऽमृत बिन्दूनाहरति । ज्योतिर्न केवल हिन्दी भाषाया अनेकान्नुपन्यासान तस्य शिर रम्भा स्तम्भनिभसुचिक्करणे सुकोमले पृथुले सुमर्दनीये स्वकीये जघनयुगलेऽवधार्य वाचयित्वा त श्रावयति स्म, प्रत्युत यदाकदा कुमार-सम्भव-मेघदूत सौन्दरनन्दादिमहाकाव्यानि शाकुन्तलादि नाटकानि कादम्बर्यादिगद्यकाव्यानिच वाचयित्वा हिन्दी-भाषायाञ्चानूदितवती । श्रीमदानन्दवर्धनस्योपन्याम 'कुसुमलक्ष्मी तु तस्याकृते प्रियतमा कृतिरासीत् । दीपकायाप्ययमुपन्यासो भृश रोचते स्म । स तु दयितामपि कुसुमलक्ष्मीति नाम्नैव यदा कदा व्यवहरति स्म ।

ज्योतिस्तु वस्तुत सा ज्योतिरेवासीद्दीपकस्य प्रभामयी रूपप्रभया, चञ्चला चलने, चपला वचने, प्रकाशिताज्ञानेन सरला स्वभावेन, सयुक्ता दीपकेन, सरसेन सरसहृदयस्य चरमपरिणति, उज्ज्वलनेनोज्ज्वलाचरणा, सधावका पुण्यकर्मणा वचसा कायेन प्रेम्णा च ।

सन्ध्याकाले कार्यालयस्य कार्यकाले समापन्ने यदा दीपकः श्रमेण श्रान्तः दिवसकार्यभारखेदेन खिन्नः स्वनीडे विहग इव गृहमाप्नोति, ज्योतिः तम् निर्वापयति शीतवारिणा प्रीणयति तोषयति शीतलेन मृदु वचनेन च परिहरति श्रान्तिं शीतव्यजनेन । तस्या मृदुहासः चन्द्रिकेवासीत्स्वागते स्नेहप्रच्छदः भ्रूभङ्गमेव तोरणद्वारं, हृदयावासे प्रवेष्टुम् पक्ष्मणेवपादत्राणम्, नेत्रोत्पलश्रेणिरेव मार्गम्, बाहुपाशमेवासीदनङ्गधनुरिव । अधरचारिणीव सा बिम्बाधरा प्रेम्णा स्फटिक-शिलापुत्तलिकेव नृत्यन्त्याह्लादेनाहृतवती ।

भवनोद्याने तयोरेकमेव निश्चितं स्थानमासीत् कोविदारस्य वृक्षच्छायायां, तत्रैकास्फटिकशिला सम्मुखेचासीदेकोच्चासन्दी चन्द्रिकाशुभ्रेव । मध्ये चैको जलप्रणालस्तेन सम्बद्धश्चैकश्शीकरनिर्झरः ऊर्ध्वं प्रवहमानस्तिष्ठति ।

हास-परिहास मध्य एव भृत्य आनयति सवासरुपिकाकषाय-पेयमल्पाहार सुभासमानेषु साधारिकाचषकेषु स्थालिकायामेकस्या सुसज्य । ज्योतिरवलोकते विविधवर्णानि पुष्पाण्यति मनोहरान् वृक्षान्, पुष्पितान् पादपान् सुभगान् विहगांश्च । वासरुपिका कषाय पीत्वा सा स्पृशति सुकोमलानि सकण्टकानि सुमनोहराणि सुमनस्तबकानि च । ध्याय ध्याय किमपि सामीनेवोद्विग्ना चेतसि चिन्तिता विचारप्रवाहे प्रवहतिस्म । उपलपुत्तलिकामिवाचलका शिलामधितिष्ठन्तीं दूरगतमानसां चिन्तानिमग्नामवलोक्य तद्विचारतन्तुं छेत्तुकाम प्रसन्नवदनो निष्कामो दीपकः पुष्पमेकं शिरीषस्य सहृत्य तस्या गौरवर्णे कपोलयोः कम्बुवद्ग्रीवायाञ्च परिवर्तते शनैः शनैः । तेन सा किञ्चिद्विहस्य दीपके दृष्टिपातं करोति सस्मिता च सपुष्पं पुष्प-सदृशं तद्धस्तं सगृह्णाति सुकोमले कमलनिभे स्वहस्ते ।

'कथमुद्विग्नासि ?' इति तेनैक प्रश्न प्रक्षिप्त' 'अलं सन्दिग्धेन' इत्युक्त्वा सा पुनरप्युद्विग्नेव 'सुरभित पुष्पजालमिदं मह्यं न रोचते' इति ब्रुवन्त्या एव तस्या आनने वनान् काषिस्मिनि प्रसृता । दशवर्षाण्यहोरात्राण्यनेनैव क्रमेण व्यतीतानि । दीर्घेन स्नेह तथैव दर्शितः । परञ्च रमाया दृष्टिः परिवर्तितेवासीत् । सान्निध्यवर्तिनीभिः सखीभिः सह यदा-यदालपति तदा तदैव स्वमनुपमामाक्रोशयति । विमनेनातिमनोहरेण सौन्दर्येण । सा तु वन्ध्यास्मि । न तारयिष्यति मे पुत्र पुन्नाम्न नरकात् । पत्नीगुणस्य गतिर्नास्ति, इह परत्र वा । परिणीतोऽप्यपरिणीतोऽभवन्मे मनः । पुनर्परिणयार्थमयं स नैकवार 'परामृष्ट' । परञ्च स तु कर्णमपि न ददाति ।' दीपकेन मतमिदं निक्षिप्तं स्ववचनमिति ।

'दीपक ! मे पुत्रक ! त्वया बलीवर्द एवाय पालित । किमनेन पालितेन।'

'अम्ब, मा मैवम् । तत्सर्वं जानाम्यहमि' त्युक्त्वावज्ञाभावेन मह स्वाध्याय कक्षे उद्याने वा विशतिस्म । दीपकोऽपि स्वकार्यं निलयात्पूर्ववदेव सध्याकाले समागाते ज्योत्स्ना तत्रैवाहृत । तावेद विलसन्ती रममाणौ वा दृष्टवा रमाना द्वेषभावेनाक्रान्तम् । एतत्सर्वं दीपकेन दृष्ट ज्ञातञ्च तत्कारणम् । सोऽपि खिन्न सन यावदध्ययन कक्ष प्रति याति तावज्ज्योतिरपिपरिदृत्य पश्यति । ज्ञायते च अनयास्य कारणम् । श्रान्तेव सा तत्रैव तस्मिन्नेव कोविदार-प्राच्छदे आत्मान शिलाफलके न्यपतद्धम्मेति शब्देन । जगन्जनकमोश्वर येनेद सर्वं विचित्रविश्व सृष्ट तमाक्षिपन्तीव सा पुष्पाण्यवलोक्य विस्तीर्णे नीलगगने किमपि पश्यति । दीपकोऽप्येकत विचार सागरे निमग्न । ज्योति साहसमाकलय्य त समाश्वासयितुमैच्छन् परस्वय त्वगाधार्णवे निमग्नेव सा यथा यथा साश्रु-पात बलाद्विहसति तथा तथैव हसितदीप इव आभाति ।

'अयि, किमिदम् इति दीपक चिबुक स्वहस्तेनात्तोलयन्नाह ।

'न किञ्चिद्विशिष्टम्' अवदत्स पूर्ववदेव । परञ्च स तु नाऽभवदनेन सन्तुष्ट । पुनरपि सा पृष्टा कथमद्य नयनारविन्दयोर्हिमपात ?

'नान्यत्, मधुकरेण पातित खलु पुष्पपराग । तेनैवासचिन्ताकुलाऽहम् । तान्यवावलोक्यच ।

'तच्चिन्तनमेवाह ज्ञातुमिच्छामि ।' 'अस्मज्जीवनोद्यानेऽप्यभविष्यत्चेत सुमनामि 'एकैकमश्रु दूर्वाया पतति भासते च रत्नविभा । परञ्च ज्योतय कथ किमपि न रोचत इतितु न ज्ञायते । तथा स्वपादाद् गुल्फेन विलीयते । 'कस्मान्नेदमुद्यान पुष्पितमितिमा व्यथयति ।'

'अलम् वाग्विलासेन ! नाहमवजानामिते प्रहेलिकाशब्द जालम् । नैवाह ते साहित्यालङ्कारान्वगच्छामि, यतोऽहतु वाणिज्यकोऽस्मि । मद्विधाना किमनेन व्यङ्ग्याभिव्यञ्जकेन सर्वेण ? सुसरला भाषैव मया ग्राह्या ।

दीपशिखायै दीपसामर्थ्येन वाताघात- सोढु शक्य, न तु तस्य नीरसत्व निस्नेहत्व वा । पूर्वमेवास्मात्सा स्वमस्तित्व समापयति शाम्यतिवा ।

'अपितुत भवता यत्किञ्चिन्मामोक्तम् । मे सर्वमेव वृत निवेदित सान्निध्यवासिन्याऽज्ञातिकया कन्यया । भवतोऽपि नास्ति किञ्चिदगुह्य प्रच्छन्नवा । किमिदानीमेवाभिनीत भवता दृष्ट भवेत । भवता स्वव्यथा मद्गोपिता । अन्तश्चिन्तित सन्मे स्मिति जीवयितुमिच्छति भवान् । परञ्च नेद मया द्रष्टु शक्यते । नाहमबोधा

बालिका सवमव मया ज्ञायते । भवना प्रवाहितेन स्नेहरसेनवाद्य मे हृदय 'सरस भूत्वा प्रकाशते । मे भर्तासि । पतिरेव परमेश्वरः । भवतो दुःख मे दुःख, सुखे च मे सुखम् । अद्यापि गृहे छिन्ता । सुहृद्भिः सह भवताप्यालपन्नन्तरान्यथवणीयानि कथितानिथ तानि । मातुराक्षेपमपि शृणोति भवान् । इदानी कन्दं सर्वम् ? मालारत्नं उत वा अपर ? हृदयेनाद्य मे निवेदनमनुमोदनञ्च काञ्चिदया सौभाग्यवती-मानेतुम् ।' प्रिय मा मैवम् अवरुद्धकण्ठेन दीपकेनोक्तम् । ज्योतिस्तु सततमेव निवेदयति । सानु निवेदयिष्यामि निःशङ्काह यतोऽधिकृता-ह निवेदनाय सवमव दृत्तमद्य भवत समक्षे प्रस्तातु महद्भार चाप्यवनारयितुमिच्छामि नाहमनन्तस्तोकमपि खेदलप्स्य । स्वहस्तेनाह करिष्यामि सर्वाणिमाङ्गलिकानि कार्याणि । स्वहस्तेनैव त्वा वर विधास्यामि ।'

प्राणाधिके ! बलिदानस्यास्य विषयमपि जानासि न वा । एतस्यै नार्य नास्माद् गुरुतर किञ्चिद्वलिदान यत् तद्धस्ते यत्किञ्चिद् वस्तु तत्समर्पयार्य दीयते । भवता यत्किञ्चिन्मह्य दत्त तन्निश्चयेनेद न किञ्चिदपि । महत्तरमपि कर्तुमिच्छाम्यह परञ्च किं करोमीति न जानामि ।

किमवशिष्यते त्वत्समर्पणाय ?'

पूर्णात्पूर्णे गते पूर्णमेवावशिष्यते । भवन्मुखेप्रसरन्ती स्मिति परिवारोद्यान विकसितानि पुष्पाण्यव म प्रसन्नता विनिरिमन्ति । वार्तालाप छिन्न गृहमुपयन 'चाय भावेनि ब्रुवता ।'

'मत्रैव स्थापय' इत्यनिच्छतापि फलकामन प्रति दत्तमवतोक्तम् । अपि किञ्चदर्यदिच्छत भवन्तो ?'

'नैव न मनस्थितस्तया गच्छ स्वनियोगमसम्पकुरु । गत भृत्ये तावुभौ व्यग्रावास्ता वार्तालापे । कामच्पिरा कथापन्थेपन्योप्योप्ण आदश्र ण।मुपण्व भणमेक शीनतरामवस्था दधार । विरम्यालपनान्यपानुश्वापयतो ।

आपतित माज्य काल । शनैः शनैः समाहूतमारुणिमानत्रिमाच्छादितञ्च तथतमम प्रच्छदम । नगरे प्रज्वालिता विद्युद्दीपका तनश्चतावुभावपि भवन प्रयुपसरत । दीपक स्वाध्याय कक्ष गतवान् । चतसि चिन्तनाभारमुद्वहन् पर्यङ्के आधातम चिन्तयन्नवापतत् । ज्योतिरपि स्वोद्घाटितस्यालिमनिपयस्य विधाविवर यावद्गच्छति तावद्देरा प्रतिच्छायामपश्यत । सान्त्वैव भवेदिति चिचि त्य सा सममक प्रतिपालयति, परञ्च माता नु तामदृष्ट्वैव निगता तत्पुरस्तात् ।

वाञ्छितं स्थानम् ।' इत्यादिशन्नेव स निस्तानिमालाऽभवत् । सत्या महोदयोऽपि 'यथाज्ञापयतिश्रीमानिति निवेद्य स्व-सम्भागमगच्छत् 'सुरम् ? प्रतिलिपि ? मुम्पत्र-मवश्यमेव प्रेषणीयम् । प्रतिलिपिस्त्रिस्माभि रक्षणीया ।' स स्वोक्तानि वचनानि मुहुर्मुहुः प्रतिशृणोति ।

वर्षाकाल । मेघाच्छादितेऽथाकाशे वारिदा इतस्ततः भ्रमन्त्यनवरता' । ज्योति तेषामारोहन पश्यति । सावगता दीपकस्यैव रूपेण । तस्य हृदयाकाशे एवमेव विचारवारिदा आयान्ति यान्ति च क्रमशः । परिणामतोऽश्रुवर्षापि सञ्जायते । उभयोरपि एकैव परिणतिः । कोविदारः तथैव तिष्ठति प्रफुल्लः । परन्तु तस्य छायाया सुप्ता पालिता वर्धिता च माधवी लताद्यापि तमपुष्पिता । द्वितीया च यूथिकापि मधुआरोपितापि तथैव पुष्प-विहीना वितताति कोविदार अश्वत्थेषु च पादपपूनमत्राव सम्बधमाना । यूथिका च प्लक्ष कोविदारो ननो माधवी प्रति । दीपको पि ध्यानस्य-योगाव बलादाकृष्टः प्रस्मामृदु मञ्जूषा सा प्रतीक्षाकुला स्वागत-तत्परा सञ्जीभूतामुद्घाटित हृत्कपाटाम युयुत्सा न गता मानिनामिवभीमपि सगर्वा सुभगा च परित्यज्य तत्रैवो पासरन्तुपत्र ध्यानावस्थिता ज्योति शिलाफलकमधिष्ठिता आसीत् । स पूर्ववृत्त स्मृत्वा तदैक शिरीषपुष्प नीत्वा तस्या ग्रीवाया कपोलयोर्वा स्पर्शयति । चाकचक्य ज्योतिरपि व्यतीत युगनाम नोडितेव नीडा' इत्युक्त्वा सा विहस्यैकतोऽपासरत् ।

मघाच्छन्ने गगन-मण्डले सर्वदैवान्तमासि प्रसृतानि । शून्यमेव जगच्च दृश्यते सघनघर्घरमपि विद्युत्तान सूचयतीव ।

'एहि प्रिये इत इत' इत्युभौ समालिङ्गितौ लीलयैव निर्गतौ विहर्तुम् । यावदुपगच्छति तावद्दृष्टि प्रागारोपिते पाटलपादपे निपतति । तत्र रक्त-स्निग्ध किसलयाञ्च दृष्ट्वा प्रसन्नश्च भूत्वा— पश्य, पश्य प्रिय !' इति माटगुरि-मकर्नद-शितवान् । ज्योतिरपि नयनयोः लज्जामञ्जनमिव विक्षिप्य, स्मितावनतमुखी 'ननु ननु भवान् स्वयमेवास्ति किञ्चिदशाजननम् । स तु अज्ञातार्थं जिज्ञासुरिव प्रिया प्रतिपश्यति । साऽपि सर्वमेव निवेदयितुमिच्छति तथैव स्मितया यतोन प्रथमारोपिता पाटलगताव न केवल बाल-किसलयाविता प्रत्युत पुष्पाच्छादितापि भवितुमर्हति । 'इत्युभौ स्वासद प्राविशताम् ।

दीपकेनोद्दीप्ता विद्युद्दीपशलाका किञ्चित्काल लुपलुपायत् प्रसारयति च श्वेत-चन्द्रिकामिव दुग्धसदृश प्रकाश चतुर्दिक्षु । तत्र दुग्धधवले श्वेतप्रकाशे पतितासीदे का पत्रिका दीपकस्य वामहस्तकञ्चुकस्य बाहौ द्वितीया च तस्य दक्षिणहस्ते

स्थितामीत् । मातचर्येण पत्रमुन्मोच्य पठति—

ह्य एव मया स्पष्टीकृत यदप व्यवहार यस्त्वया त्रियते स इदानीमसह्य । अद्य तु त्वया मे हृदयमेव शतधा कृतम । त्वयापयोत्पादनाय यत्नमिव मत्वा स्थिताहम् । भवान् स्व व्यवहार मर्गोय मा प्रतिआकृष्ट भविष्यतीति मया चिन्तित परन्त्वाद्य मया ज्ञातमिद यम्नाहोऽभवद्भवति । निमीलितज्ञाननेत्रया मयापरमन्यैवाय स्नेह कृत भवमयाशम । यद्यपि मे जनक सम्बन्धमिद कदापि नैच्छत् परन्तु । भवतु अधुना मयद निर्णीत यदभोजनमेव, मयात्र स्थिरने तातपितुर्गृहे एव सुप्राप्यम् । जनकोऽप्यननतानभिज्ञ आसीत् । यस्यैं मया पितुर्गृह परित्यक्त तत्त लब्धमन्नस्तोकमपि । यद्यद्यैव स जनकस्त्वत्राहरति पद तर्हि का भविष्यति ते स्थिति ? प्रवृतिरियवहारा-चरणमपि श्व एव मयावश्यक गमि यास्यति ।

इत्यरम्

या सदैव ते भीवतु —

शकया,

अमिता

अवगत एव निर्गताद्य तस्य निशा । माया नैक-वार स्माग्नितापि नेवामिनामवेष्ट दूरमाप न व्यवहृतम् । सवनैव ग्रामगत अन्यतम ज्योतिरिया वार्ता धृत्वास्तीव द खिताऽभवत । यत सवात्मीदस्य सवस्य घटितस्य कारण बीजम् वा । द्वयो समाता नारेवर्योमिलतममभवमत्र ।

दीपक वस्त्राणि परिधाय एकमव विचार बीज 'मम्मात्मेवविडाल ' इति स्वमनस्यारोप्य चिन्तनमवगाह्य गृहमनगत । गोद्याधुनैवेमारमवताये क्षणा-स्मुक्तिमिच्छति ज्योतिर्यच्छतमपश्यत्तत् यावदशक्नोत् ।'

'दीपक नहि ! मावशेनोक्त कोन्चिदेन । दीपक तवैव प्रतिशातवति तावत् यावत काष्टिरग आम्र आदिशति पादवेष्टम् ।'

'दीपक अग्राह वचनद्वयमानासि मितृमिव ग्रामि ।'

अहन्तु एकनैव वाक्यन निर्णेतुमिच्छामि ।' इत्युक्त्वानन पत्रमेक समर्पितम ।

'अस्माभिनिरूपणीय भवनैव निरूपितम् । वादम् । पत्रमुद्घाट्य वाचयित्वा त्यागपत्रमिति च ज्ञात्वावदत् ।

अपि भवता समीनयवैद निर्णीत, त्वरायां वा ?'

'आम, मया सर्वं सम्यगेव निरूपितम् ।'

'अमितायाः तु न कि ?'

'तया निर्णीतं पूर्वमेव ।'

दीपकस्ततो न जाने कदा कथं वा मार्गं दृश्यात्नपश्यन्नेव स्वं गृहं प्राप्त । स्वकृतं प्रियायैथावत्प्रिमैच्छत्, परञ्च न तादृशं सत्वमाप्नोत । पत्रेण स स्फुटं सन्देशमितुकाम यदा पत्र लिखति, तदैवापश्यदेकां कामपि पत्रिकां ज्योतिहस्तलिखितामुन्मुक्ताम—

प्राणेश,

यद्यप्यहं भवन्तं प्रगाढ स्नेह-पारावारे निमज्य गच्छामि परं दुःखानुभूतिस्वकरमेव भविष्यतीत्यपरिश्रम् । मुदासेन सम्पूर्णवृत्तं निवेदितं भवन्तं पूर्वमेवाग्य । सम्पूर्णं परिवारं मत्कारणेन दुःखमाप्नोतु इति मे हृदयं न स्वीकरोति । भवता सम्पदैव मे सम्पदा । अतोऽहमात्मनः प्रसन्नतामपि बलिकर्तुमिच्छामि । भवद्वारोपिते पाटल-पादपे प्रस्फुटितः पल्लवः मे समीपे सुरक्षितोऽस्ति । पुण्ये जाते सति शीघ्रमेव मुनिना भविष्यन्ति भवन्त । तमहं प्राणपणेनापि पालयिष्यामि । तदेव भविष्यति भवतः प्रतिकृतिः । शाश्वतः सनातनोऽयमस्माकं स्नेहः । आवयोः स्नेह वारिधारा सदैव प्रवहिष्यति ।

भवतामेव सदैव दीपस्येव
ज्योति

दीपक सार्त्तोरा 'अम्ब, विनष्टं सर्वं, हा धिक् हा हतोऽस्मि । सर्वनाश मञ्जात, अम्ब !' क्रन्दनं निशम्य रमया रामचरितमानस-पठनं मध्य एव परित्यज्य तत्रागतम् तया नेदं ज्ञातं यत्भणे एव भविष्यति लङ्का परस्य । दीपक तत्र पर्यङ्के विगतसंज्ञः पतितः आसीत् पत्रं हस्ते धारयन् । सा त्वरितमेव दूरभाष-यन्त्रेण डाक्तरं सूचयामास । तनश्च सा पत्रं पठितवती । चीत्कारमेकं सहसैव तन्मुखान्निर्गतम् "मया न ज्ञातं यन्मयैव सुमनोहरोद्याने कण्टकाकीर्णगुल्म उप्त ।

अश्रौपित्वा दीपकः स्वबुनिमल्याधमेर्णवाप्नोति च स्वजीवितं निर्बाधं सम्यगेव । स्वमातरं प्रेषयति वृत्तिम् । परञ्च स गृहं नावस्थातुं शक्नोति । भवनं तु दूरादेव प्रेक्षितुमिच्छति । नार्या शीनोष्णप्रकृत्या स प्रवासकान् परिबाधक कृतं बालकान् पाठयति । एनेनधनमर्जयति कालं यापयति च मुहुर्मुहुः स्वप्रियतमा ज्योति तयोक्तान् साहित्यसन्दर्भाञ्च स्मरति यदा-कदा-लिखति, काव्यं वा करोति ।

यत माहित्य-सन्दर्भ सम्भारस्त प्रेरयति किञ्चिल्लिखितुम। स्वानुभूति मदनेनैवाभिव्यनक्ति। नारी चरितस्यारोहावरोहान् स्मरति यैः सामान्या जना यथा कालिदास धनानन्दादय महाकवि-पदमारूढा कृता। पवनस्योपवक्ता हरितैः पत्रविटैश्च वृक्षैर्विविधवर्णपुष्प पादपैश्चाच्छादिता। प्रशमाधिकृतमिवासीत सम्पूर्णं वनम। कस्यापि पुरातन महर्षेराश्रमादून नासीत् तत्र।

दीपको विचार-मग्नो यावद् भ्रमति तावदेका कदली कण्टकाकीर्णे गुल्म समीपे आरोपिता विलपिताञ्च पश्यति। कदली स्वमराप्रकृत्या दपिता नृत्यतीव दश्यते। गुल्मकचानिङ्गितुमिच्छति। परञ्च गुल्मकरं प्वकण्टकैर्विच्छिद्य द मालि ङ्गनमस्वीकरोति। तयो क्रीडा तस्य गृहस्थस्य सम्पूर्णां कथा पुनरावतयति। कापि युवति त सगाम्भीर्यमुद्विग्न वित्तञ्च सम्मुखेस्थि वाष्पानादयकरोति। सोऽविलम्ब मेवाभिजानाति ताम। परञ्च सा दीपक कूर्चेणाच्छन्नमुत्त नाभिजानाति। अमिता एषा त्वमसि? आश्चर्यचकिता तम्पाकृत्यार्तान्कुता सा.अनवमेवापश्यत्त मुखम। स तु— अलमातङ्कितया। मा भैषी कस्मादत्रागता सि भवनीतिकथ्यनाम् ज्ञातुमिच्छामि' विहसन्नेवोक्तवान्।

'को भवान् अपि मया ज्ञातु शक्यत?

भवती मामभिजानात्येवे यावश्यक्ता न वतते।

कथमाशङ्किता भवतीति ज्ञातुमिच्छामि स्फुटम।

कथमह ते माहात्म्य विदद्यामि? भय परित्यज्य कथ्यता सम्पूर्ण वृत्तम। सत्य न दापयितुमर्हति कोऽपि। तस्य फलानि विषमभूमावपि सुमधुराण्येव भवन्ति। य सत्य गोपायति स प्रज्ज्वलितमनलमवाच्छादयति वस्त्रेण। सत्येनासत्य तु रामायनिक्वस्त्रमिव दह्यते।''

अमितया वाष्प पर्याकुलेक्षणया हृत्वालुप्य प्रमाजयितुमिव सम्पूर्णां कथा श्राविता। पूर्वोक्ता गर्वोक्तय यत्त्व स्मृतिपटलमप्यायाति, तत्र् वृश्णोरगइव दशति। उद्योगालये महान् विप्लव प्रस्फुटित। आक्रोशिता श्रमिका भवनाट्टालिकामागे दुमयतन्त। जनता पितदावग्निरागच्छति। तदैव भवन वदिवाभकोवाप्तपतत। तदैव सहायतदेक श्रमिक। राजपुरुषा अपि तत्क्षणमवापतिता। त पुरुषैरावा पलायितौ निरूपितौ।

किं विलम्बेन शीघ्रमेवाधुना त्वया न्यायालयं गन्तव्य, तत्र च आत्म समर्पण करणीयम्। एवमेव प्राप्य सतु न्याय।'

'प्रज्ञानार्या तु भवन्त । भवन्त एव मनाथीकृत्य मां तत्र समर्पयन्तु, येन रक्षणं न्यायं च लभे।' स्वल्पतापन तप्तं स्वर्णं यथा त्यजति कालुष्यं, तथैव सात्पसन्ताफेनैव संताप्ता मनसः कालुष्यं परित्यज्य विशुद्धा सरलस्वभावा च भूत्वा भासते स्म। सा मानमयं धिक्करोति। त्वाज्या खलु मे प्राणा इति सा मनस्यकरोत्। राकेशआरक्षाधीक्षकोऽपि मित्रस्य वचनेन विश्वस्य शीघ्रमेवावधारयद्वस्तुस्थितिम्। सुहृदागमने स्वागताय चायमानेतुमाज्ञापयति। चाय-पेयमानयन्ती परिश्रामवदना कृशोदरी विशोषिताञ्जननयना मुन्मुक्तदीर्घालिका शुभ्र-वस्त्रावृता च दृष्टवामितादीपकौ चकितावभवताम्। तदुपरि दृष्टिं विनिवेश्य यावदपश्यत्तामुभौ तौ तावत्साऽपि चकितापलक-निष्फारित-नयना तत्र तिष्ठति, स्वसन्तुलनमपि च त्यजति। स्खलन्ती निपतन्तीव सा पादयोः पतति।

'कस्मात्त्वमेवानीतं चायं पयम, नायातो भृत्य किम्?' राकेशेन पृष्टाऽपि तया न प्रत्युक्तं एकोऽपि शब्द। तामत्यक्तकामल्पिका कषाय पेयामवाङ्मुखी विह्वला बाष्पायमाणा चालिङ्ग्य स्वाधुभिः तद्वस्त्राणि सिञ्चति।

राकेशस्तु किं-कर्तव्यविमूढ शिलाखण्डमिव निश्चलः निष्पन्दश्च पश्यतीद सर्वं वृत्तम्। अमिता स्वपूर्वकृत्यैः लज्जितावनता च विलपति। चाय-पात्रं तु भवग्न-षगितिवाप्पमुत्सृजति स्म।

'ज्योते!' चकितेन राकेशेनोक्तम्।

'आम् भ्रात!' इति लज्जायमाना पादाङ्गुष्ठेनधरातलं भेत्तुमिवेच्छति।

'राकेश, नाहं राजेश, दीपकोऽहम्। एषाऽमिता।' तेनैव सम्पूर्णं वृत्तं निगदितम्।

अथ त्रिकोणस्य तिस्रः रेखाः पुनर्मिलनं भेजुः। तेषां बिन्दवः समाविष्टाः परस्परम्। ततोऽवाप्तः शिशुरेकः।

'बालोऽयं कः?'

'त्रिकोण-संगमे प्रयागोऽयमिति परिहासेनामितोक्तवती।

अथ कोविदारसमीपे कुसुमाकीर्णं शिला-पट्टमधितिष्ठन्ति सर्वे पाटल-पादपाः पुष्पराज्ञ्याविता। माधवी-लतापि सुतरां पुष्पिता सदृश्यते?।



## सत्यस्यान्वेषणम्

कुमारी प्रभा

प्रकाशो विशालश्चाभिन्ने मित्रे आस्ताम् परं ते विचारणाया स्तरे नितान्तमेव भिन्ने अविद्यताम्। विज्ञानस्याध्येता विशालस्तर्कप्रवणो विचक्षण प्रज्ञया च समुपेत आसीत्। स सदैव स्वकीयानां जिज्ञासानां तर्कसंगतं बुद्धिग्राह्यं च समाधानमन्वेष्टुं प्रायतत, परं दर्शन साहित्यादेश्चाध्ययनेन स नितान्तमेव सम्वेदनात्मको भावुकः परमश्च आस्तिकः समजायत। स स्वकीयानां समस्त-जिज्ञासानां निदानं सत्यस्यान्वेषणेनैव प्राप्तुमियेष। स्मर एव दिवसे सप्ताहे स नियमित रूपेण स्वामिनः सत्य व्रतस्य 'सत्यमेव ब्रह्म' इति विषयमाधृत्य प्रवचनं शुश्राव। रविवारस्य प्रातः स्वामिनः प्रकाश मिलित्वैव तां सप्ताहस्य उपलब्धिं वर्णितवान्। प्रकाशेन तद्वचनञ्च श्रुत्वा विमनस्कतया प्रत्युत्तरितम् -

बन्धो ! किमर्थं निरर्थके चिन्तने निमज्य स्वचित्तमशान्तं विदधासि ? सत्यस्यान्वेषणे न केवलं त्वमेव प्रयुताहं स्वामिनः सृष्टेश्च सर्वे प्राणिनोऽनन्तकालात् प्रयतन्ते। परं किं तेष्वेकेनाप्यस्यां दिशि साफल्यमवाप्तम् ?

विशालेन प्रत्युत्तरितम्- सुहृत ! अहं तु सत्यमन्विष्यैव शान्तिं प्राप्स्यामि। स्यात्तदर्थं सन् किमपि। कथं खलु सहमतो भवेयमहं त्वदीयाभिः धारणाभिर्यतः ज्ञान-विज्ञानदर्शनजीवनादीनां च सत्यमेकमेव विद्यते। वस्तुतस्तु सत्यान्वेषणेनैव सत्यम भिज्ञातुं शक्यते।'

अनुष्ठेनेव प्रकाशेन कथितम् त्यजैतत्। त्वया तु पुनरपि तदेव पारम्परिक विवेचनं प्रारब्धम्। अनेन तु निस्सीमं विवादं कृत्वापि न कमपि निष्कर्षमवाप्तुं शक्नुवः। न स्वीकरोषि किं वैज्ञानिकं तथ्यं त्वम्? न किं विज्ञानस्य सर्वे एव प्रयोगा तथ्याधारिता भवन्ति ? अस्तु, अहमपि प्रयोगस्य सिद्धिं विधाय स्वमतं स्वीकृतं कारयिष्यामि।

'सत्यमन्वेष्टुं कीदृशं प्रयोगं चिकीर्षसि त्वम् ? जिज्ञासुना विशालेन पृष्टम्।

'त्वं खलु प्रयोगाय प्रस्तुतो भव। एष प्रयोगस्तु न खलु पारमार्थिकः। वस्तुतस्तु एकं लघुनाटकं मञ्चनीयमस्ति। ततश्च सत्यस्यान्वेषणं भविता।' प्रकाशेन निगदितम्।

विशालेन खिन्न मनसा कथितम्- "अयि भ्रात! प्रहेलिका मा पृच्छ? स्पष्टतो ब्रूहि तद्यन्मया करणीयम्।" तदनन्तरमुभे मित्रे कस्मिंश्चिद् वैयक्तिके चिकित्सालये प्राविशताम्, यत्र खलु नगरस्यैको विशेषज्ञो डा० अविनाश महोदयः स्थितः सन्नातुराणां परीक्षणं विदधाति स्म। तदैव विशालः स्वोदरं हस्तेन धारयन् हा! मृतोऽस्म्यहमिति क्रन्दन्निव स चिकित्सकाभिमुखमासन्द्यामसीदत। प्रकाशेन च मुहुर्मुहुरुदररुजो भीषणता चिकित्सकाय प्रकटिता। ततस्तु चिकित्सकेनैकाधिका प्रश्ना कृताः ततश्च कतिपयानि गुटिकानि सूच्या च प्रवेष्टव्यं किमपि भेषजद्रवं लिखित्वा शुल्ककृते दश रूप्यकाणि याचितानि। शुल्कं प्रदाय तावुभावापणाद् भेषजं क्रेतुं प्रारिष्टताम्। चिकित्सालयाद् बहिरागत्य विशालेन प्रोक्तम् 'प्रकाश! किमेतत्, मोदृग् त्वया प्रदर्शितम्? त्वया तु व्यर्थमेव दश रूप्यकाणि प्रदत्तानि।'

प्रकाशस्त्वेतदेव कथयामास- "सत्यस्यान्वेषणं किं व्ययं विनैव सम्भाव्यते? अधुना तु त्वं मया साकं चिकित्सालयं चल।" ततश्च तौ कमप्यौषधालयमाजग्मतु, यत्र चातुराणामत्यधिकः सम्मर्दश्चासीत्। विशालः प्राय क्रन्दन्निव स्वहस्तं नाडिका-परीक्षार्थं वैद्यस्याभिमुखं प्रससार। वैद्येन च तत्परतया जठर-विकारेण रोगोत्पत्ति निश्चीयोपचारार्थं कतिपय-भेषजानां नामानि लिखितानि। तेन पथ्य-सम्बन्धिन्यो विशेषा निर्देशा अपि कृताः। प्रकाशस्तु वैद्यराजाय पञ्च रूप्यकाणि दत्त्वा आगामि-दिवसे प्रत्यागमनं ससूच्य ततः प्रतस्थे। औषधालयाद् बहिरागत्य विशालः पुनरपि प्रकाशं पप्रच्छ डाक्तराणां वैद्यानां च कृते शुल्कं प्रदाय त्वं कीदृशं सत्यमन्वेष्टुमिच्छसि।

अयि भ्रात! न किं त्वयैकस्यैव रोगस्य पथ्यद्वयेन सह व्याख्या-द्वयं प्रत्यक्षी-कृतम्। एकस्तु पथ्यमेव महत्त्वपूर्णमनुते। अन्यश्च कथयति यत् किमपि भक्षय पिब वा। एकस्यैव रुजो निदानं चिकित्सा च डाक्तरो वैद्यश्च पृथक्तया चिकीर्षतः। प्रकाशः तत्परतया जगाद

खिन्नेन विशालेन पृष्टम्-'साम्प्रतं किमन्यत् विधातव्यम्? तावदमिन्द्रजाल एव नावगन्तुं शक्यते मया।'

प्रकाशस्तु एतावदेव कथितवान् 'अल्पस्तावदभिनयोऽवशिष्यते।'

ततश्चोभे मित्रे प्रचण्ड—मार्तण्डनाम्न्या ज्योतिर्विज्ञान शालायामाजग्मतुः।

तत्र ज्योतिषाचार्यो महामान्य परमानन्द-महोदयोऽनेकैः शिष्यैः परिवृत निश्चिन्त-मुद्राया समागतानां जनानां हस्तरेखा जन्म लग्नं च दृष्ट्वा भविष्यफलं वर्णयति स्म। विशालेन तत्र गत्वा स्वोदर-विकार सम्बन्धे निवेदितं निदानाय च प्रार्थितम्। ज्योतिषाचार्येण विशालस्य ग्रहनक्षत्राणां गणना विधाय शनैः सार्धसप्तवर्षं दशामभिधीय केतु मंगल नाम्नो पाप ग्रहयोरन्तर्दशायां प्रकोपं च प्रतिपाद्य तयो शान्त्यर्थं मैत्रमनुष्ठान प्रस्तावितम्। तदनु आचार्येण प्रतिदिनं पापग्रहाणां जपहवनादिना सह वचन इतरोऽपि दानपुण्यस्योपाया निर्दिष्टा। अनुष्ठानस्य विधानेनोदर विकारः सदा सर्वदायै निवर्तिष्यते, इति स विश्वसिति स्म। अनुष्ठाने त्वनुमानतो व्ययश्चैक पचाशदुत्तर शतरूप्यकात्मको वर्णितस्तेन। धूर्तेन तेन प्रकाशस्तु ज्योतिषाचार्याय सार्द्धं पंच रूप्यकाणि प्रदायाग्रिममासस्य प्रथमतिथौ प्रत्यागन्तुं निवेदयामास। ततश्च स विशालेन सार्धं बहिरायातौ। विशालस्तु साम्प्रतं भृशमेव खिन्न आसीत्: तेनाश्रोतमये स्वरे कथितम् 'भ्रातः! गच्छतु त्वदीय सत्यान्वेषणम्। अहं त्वधुना गृहमेव यामि।'

प्रकाश सानुनयं निजगाद त –' मित्र! केवलमेक एव प्रयोगोऽवशिष्यते। तदनु सत्यान्वेषणं पूर्णतां यास्यति। अधुना तु मौलवि –महोदयानां पार्श्वेऽपि यास्यावाव्याम्।

ततश्च तावुभौ खुदाबख्श नाम्न कस्यापि पीराख्यस्य गृहमयाताम्। तत्र मौलवि महोदय स्वशिष्यैः रावृत आपादमस्तकं कृष्णं वस्त्रादि धारयन्नसीदत। हस्तयोस्तैकमाममविरिट्टं दधार स। तदनु विशालो मौलव्याः समीपमागत्य नमस्चकार। ततश्चानन्तरं तेन स्वोदर पीडा निवेदिता। धूर्तेन परमगाम्भीर्येण मौलविना पृष्टम् 'एषु दिवसेषु त्वं कस्यचिज्जीर्णवृक्षस्य पार्श्वंतस्तु नैव गतवान्?' विशालेन किञ्चिद् वक्तुमभ्यवधा, परं मध्य एव प्रकाशेन झटिति कथितम् 'मौलवि महोदय! मम मित्रं तु प्रतिगत प्राचीनवसतौ जीर्णवटवृक्षस्य अधस्तादागत्तु विवशोऽस्ति। तथा च ।

प्रकाशेन स्वकीयवचनं न पूरयितुं पारितम्। तत्पूर्वमेव मौलविना प्रोक्तम् अलं, अवगमवगतमया। सैव ध्वजा धारिणी वृद्धा पिशाचिनी तव मित्रस्य शीर्षमधिरोहं। बलीयस्यास्तस्या अपाकरणेनैव स्वनुमित्रस्योदरं पीडा समाप्तिमेष्यति।

तदर्थमस्माभि किं विधातव्यम्? 'प्रकाशेन जिज्ञासितम्।

मौलवी कथयामास- 'त्वया खलु अज- कुक्कुटयोर्बलिर्देया। अन्यच्च पञ्च–भारमिता कृष्णमाषा तदर्थं-मालायां च कर्पूर लवङ्ग-पुष्पादीनि गृहीत्वा-

शुक्र वासरस्य सन्ध्यायामत्रागन्तव्यम्। तदाऽहं सर्वमेवावशिष्टं कार्यं सुष्टु विधास्यामि।

"बाढं मौलवि- महोदया। आवां शुक्रवासरे सायमेव वस्तून्यादायागमिष्याव।" प्रोच्यैतदुभौ तौ शीघ्रतया प्रयातुमुपचक्रमतुः।

'भयितिष्ठ तावत '। आमनोपहाररूपेण सार्धं-पञ्च-रूप्यकाणि तु प्रयच्छ त्वम्। पीरस्य द्वाराग्नेत्थमेव गन्तव्यं त्वया।' मौलविना आदेशात्मक इव स्वरे प्रोक्तम्।

'साम्प्रतं तु चतुराणकोत्तर-रूप्यकमेकं दद्म। अवशिष्टं तु शुक्रवासरस्य सायमानेतव्यमावाभ्याम्।' कथयित्वैतदुभौ कथमपि त्वरया प्रतस्थाते। ततश्च तौ प्रकाशस्य प्रकाशयुते यन्त्रे समागतौ।

विशालं सम्बोधयन् प्रकाशो जगाद- 'दृष्टं त्वया मित्र। सत्यान्वेषणं खलु दुष्करं विद्यते। डाक्टरो वैद्यो, हकीमः पीरश्च सर्वे एवैकं खलु रोगरूपिणं सत्यमभिज्ञातुं कति मार्गानुपायांश्चाङ्गी- कुर्वन्ति। ततोऽपि रुजो मूलं तु कश्चनैव ज्ञातुं पारयते। इत्यमेव स्वामिनः सत्यानन्दमहोदया, अहं च दार्शनिका, विचारका, धर्मगुरव, वैज्ञानिकाश्च सर्वे एव स्व-स्वपद्धत्या सत्यमन्वेषयन्ति। परं वस्तुतस्तु सत्यमनुभूतेर्विषयोऽस्ति। तदन्वेषणं स्वयमन्याश्रयं विनैव स्वकीयेऽभ्यन्तरे विधातुं पार्यते। अथवा प्रयोगसिद्धमपि सत्यमन्वेष्टुं प्रयोगास्तु कतिपये विधेया एव। एतत् खलु समाधिमग्नो भूत्वा केनाऽप्युपायेनान्येन वा साध्यम्। मन्दिरादीनि पण्डितादयश्च सर्वे मार्गस्य उपदेष्टारः सन्ति। गन्तव्यं प्रति तु स्वयमेव गमनीयम्।'

विशालेन प्रसन्न-मुद्रया निगदितम्- 'प्रकाश! धन्योऽसि त्वम्। त्वया तु यथार्थमेव सत्यान्वेषिका दृष्टिरवाप्ता। साम्प्रतमहमपि स्वयं सत्यान्वेषको भूत्वा स्वान्ते सत्यमन्विष्यामि निजैर्नैव प्रयोगेन।'

